प्रकाशक :
योगेन्द्र मोहन 'गुप्त', बी. ए., प्रभाकर ज्ञानी,
शक्ति प्रकाशन,
माडल टाउन, लुध्याना वा
फीरोज़पुर शहर ।

## ग्रन्थस्य अस्य प्राप्तिस्थानानि

१. ओरियंटल बुक हाउस, ३३० ए, सदाशिव पेठ, पूना २
२. चौखंबा संस्कृत सीरीज़ आफिस पो. बा. नं. ८, बनारस
३. ओरियंटल बुक एजंसी, शुक्रवार स्ट्रीट, पूना २
४. Ox ford University Press, Appollo Bunder, Bombay.
५. W. H. Smith & Sons Ltd., Strand House, Portugal St., London W. C. 2.
६. महेन्द्र ब्रादर्स, कचहरी रोड, लुध्याना

मुद्रक :
बालकृष्ण एम. ए.,
[illegible] प्रेस

पूज्याय

संस्कृत साहित्यानुरागिणां

विद्वद् वन्द्यानां

परमादरणीय श्रीयुत

आर. एन. बैनरजी

आई. सी. एस.,

अध्यक्ष यूनियन पब्लिक सर्विस कमिशन

महोदयानां

करकमलेषु

सादरम्



प्रो० हंसराज अग्रवाल

[ जन्म - पौष शुक्ला १२, सम्वत् १९६२ ]

# ❀ प्रास्ताविकम् ❀

हन्त स्वगुणगरिम्णा सकलभाषान्तर साहित्यान्यतिवर्तमानस्यापि संस्कृतसाहित्यस्येतिहास' संस्कृतभाषाऽनुपनिबद्धतया संस्कृतभारतीभवने संस्कृतभक्तैर्दुरापः स्यादित्येतादृशी संस्कृतरसिकान्तराणां हृदयानीव ममाऽपि हृदयमर्माधिशयाना या काऽपि व्यथा हृत्कण्टकायते तामपनेतुं खलु मामकीन एष प्रयत्नः ॥

यतः सन्दर्भोऽयं संस्कृतानुरागिणां स्ववगाहो मनोरमश्च स्यादित्येष विचारोऽस्य लेखनक्षणेषु निरन्तरं मन्मनसि स्फुरन्नभवत्, तस्माद् विश्लेषणरीतिः पदाऽसन्धिरीति श्चानुसृताऽत्र मया। तथाहि, प्रथमं तावत्, कालिदासादिवर्णनावसरेषु 'महाकाव्यकारः कालिदासः' रूपककारः कालिदासः,' 'खण्डकाव्य ( Lyric ) कारः कालिदासः' इत्येवंरूपा नानाप्रकरणरचना अविधाय तत्तत्कवेर्नाना विधकृतयस्तत्तत्प्रकरण एकत्रैव परिचायिता आलोचिताश्च। अपरञ्च, न केवलं पदसन्धिर्दीर्घसमासोऽबहुलप्रचारस्तिङन्तादिपदप्रयोगश्चेह सावधानमनसा वर्जितः, अपि तु 'इदम् अत्र वक्तव्यम्' इत्येतादृशेषु वाक्येषु नहि हल् मकारेण सह तस्मात् परः स्वरो मात्रारूपेण योजितः, 'हन्तुम् उद्युङ्क्ते' इत्येवंविधानि च वाक्यान्यपि प्रायेण 'हन्तुमुद्युङ्क्ते' इत्येवंरूपेण न लिखितानि ॥

यथासम्भवं नानानूतनतमाऽनुसन्धानफलान्यत्र समावेशितानि, पाश्चात्यैः प्रवर्तिते सिद्धान्तवर्त्मनि निपुणं निभाल्य प्रवर्तमानेनाऽपि च मया न पौरस्त्यविचारसरणिः कदाचिदपि प्रस्मृता ॥

अथ येषां प्रामाणिक कृतिकाराणामुपकृति प्राग्भारमहं शिरसा वहामि सुगृहीतनामधेयास्तेषु कतिपये मैक्डानल–कीथ–विण्टर् निट्ज–पीटरसन–टामस–हौपकिन्स–रैप्सन–पार्जिटरप्रभृतयो भवन्ति। एषां हि कृतीरस्य ग्रन्थस्य प्रणयनक्षणेष्वहं प्रतिमुहुर्व्यलोकयं पादटिप्पणेषु चैतन्नामानि प्रमाणतयोदलिखम्। एम. ए., डी. फिल., आफ़िसर-ड-एकैडेमि (फ्रांस) इत्युपपदैः समलङ्कृतानां पञ्जापविश्वविद्यालये संस्कृत प्रोफ़ैसर पदमधिष्ठितवतां स्वर्गीय गुरुवर श्री डाक्टर लक्ष्मण स्वरूप ऽऽर्यपादानामहं सविशेषं कृतज्ञः, एषां हि चरणानुगस्य मया यदधीतं तदत्र लेखमात् कृतम्।

प्रयत्नोऽयं मे गीर्वाणवाणीगृह्याणां यथोचितं प्रीतिकरो भविष्यतीति दृढमाशास्ते—

विदुषाम् अनुचरः

**अग्रवालोपाह्वः हंसराजः**

# विषय तालिका

## अथ प्रथमोऽध्यायः

### भूमिका



## अथ द्वितीयोऽध्यायः

### ऐतिहासिक महाकाव्यद्वयी पुराणानि च

## अथ तृतीयोऽध्यायः

### भासः, कालिदासः, अश्वघोषश्च



## अथ चतुर्थोऽध्यायः

### काव्यानि

## अथ पञ्चमोऽध्यायः

### खण्ड काव्यानि सुभाषितावल्यश्च



## अथ षष्ठोऽध्यायः

# संस्कृत साहित्येतिहासः

## प्रथमोऽध्यायः

### भूमिका

## आद्यः खण्डः

### संस्कृत साहित्यविभूतिः

अत्युक्तिप्रतिष्ठा संस्कृतसाहित्यस्य विभूतिः इति तावद् वक्तुं न शक्यम्। अस्य हि साहित्यस्य वयोवर्षिष्ठत्वेन, महामहीखण्डमण्डलव्यापित्वेन, दुष्परिच्छेदेन परिमाणेन, निरतिशयेन वैभवेन, अनन्यतुल्येन सौन्दर्यप्रकर्षेण, संस्कृतीतिवृत्तोपयोगिना[1] गुणेन च महति मौलिके पुरातने च वाङ्मये अस्मिन् अस्मदभिनिवेशः सर्वथा खलु समर्थ्यते। न च केवलम् एतावन्मात्रम्। निमित्तान्तराण्यपि तावत् संस्कृतसाहित्याध्ययने विद्याविलासिनां विशिष्टाम् अभिरुचिं सञ्जनयन्ति। तत्र प्रधानतया विवक्षार्हाणि कतिपयानि तु इत्थम् अनुसन्धेयानि—

(१) संस्कृतसाहित्याध्ययनं तावद् ऐतिहासिकानां परमप्रीतये कल्पते। साहित्यं च एतत् न केवलं विशालभारताभिजनानां जनानाम् अतिवर्षसहस्रत्रयम् अभिव्याप्नुवत् प्रातिभिकजीवनस्य इतिवृत्तम् अद्यावधि गोपायति, प्रत्युत उदीच्येषु त्रिविष्टप—चीन—जयप्राण—कोरियादीन् जनपदान्, अपाच्येषु लङ्काद्वीपम, प्राच्येषु मलयप्रायोद्वीपं प्रशान्तमहासागरस्थितानि दविष्ठानि द्वीपान्तराणि च, प्रतीच्येषु तुरुष्कस्थानप्रभृतीन् च देशान् अधिवसतां सङ्ख्यातीतनानापौरजानपदानां बौद्धिकप्रवृत्तिष्वपि खल्वेतत् पुरा प्राज्यं प्रभावम् अपीपतत्॥

---

१—परामृशन्तु 'विंटरनिट्ज़'-कृतस्य 'ए हिस्टरी आव् संस्कृत लिटरेचर' नामकस्य ग्रन्थस्य पूर्वं भागम्॥

(२) प्रत्यासन्नशताब्दीषु हरिवर्षेऽपि प्रत्यग्रयुगप्रवर्तकः प्रभावः खल्वमुना प्रदर्शितः[1] ॥

(३) संस्कृतम् एव भारोपीयभाषावर्गे[2] ज्येष्ठा भाषा, ततश्च साहित्येऽस्याः एतस्य वर्गस्य प्राचीनतमसाहित्यस्य स्मृतयः[3] सुरक्षिताः इति न कस्याऽपि विमतम्। धर्मप्रज्ञायाः समुद्भवः सक्रमोपचयश्च यथा ह्येतत्साहित्याश्रयेण परिचीयते न तथा निखिलायाम् अवन्यां साहित्यान्तराश्रयेण[4] ॥

(४) ऐतिहासिकमहाकाव्यं, राजपरिषत्काव्यं, सङ्गीतकाव्यं, रूपकं, गद्यात्मककथाकाव्यम्, औपदेशिकजन्तुकथा, लोकप्रियकथा, वैज्ञानिकसाहित्यं च इत्यादि यद् यद् विशिष्टं विद्यास्थानं साहित्येतिपदेन गृह्यते तत् कृत्स्नम् एव संस्कृतसाहित्येन क्रोडी क्रियते। "भारते वर्षे न केवलं राजनयः आयुर्वेदः फलितज्यौतिषं गणितज्यौतिषम् अङ्कगणितं ज्यामितिश्चैव तौर्यत्रिकं रूपककला, तान्त्रिक क्रियाविज्ञानं दैवतं चाऽपि विशालस्य अंशतः प्राचीनस्य च साहित्यशरीरस्य घटकानि भवन्ति, कामकला चापि विज्ञानतया व्यवस्थाप्य विशिष्टेषु शिक्षा-सन्दर्भेष्वनुशिष्टा दृश्यते"[5] ॥

(५) न केवलं विषय बाहुल्य हेतोरेव, गुणप्रकर्षनिमित्तादपि संस्कृतसाहित्यम् अभिख्यां गतम्। "सूत्र-रचनायां भारतीयानाम् इव न खलु समग्रेऽपि महीमण्डले कस्यचिद् देशान्तरनिवासिनो जनस्य कृतहस्तता कदाचित् समभवत्......। भारतीयैः सम्पादितानाम् अप्सरः कथानां जन्तुकथानां गद्यात्मककथानां च सङ्ग्रहाणां तावत् सार्वभौमसाहित्येतिहास-

---

१—विषयेऽत्र विशदतरं टिप्पणं वक्ष्यमाणे द्वितीयस्मिन् खण्डे निरीक्षणीयम् ॥

२—तामिल-तैलगु-मलयाळम-कनाडीतिभाषाचतुर्वर्गवर्जं प्रायः सकलभारतीयभाषाः प्राच्यां, यथा तथा प्रायः सकलयूरोपीयभाषाः प्रतीच्यां, संस्कृतभाषाम् अन्विता भवन्तीति तासां वर्गो भाषासर्गे 'भारोपीयवर्गः' इति निरूढिम् आरूढोऽस्ति ॥

३—Monuments

४—परामृश्यतां मैक्डॉनल रचितस्य 'ए हिस्टरी आव् संस्कृत लिटरेचर' नामकस्य ग्रन्थस्य षष्ठं पृष्ठम् ॥

५—परामृश्यतां विटरनिट्ज़कृतस्य 'हिस्टरी आव् संस्कृत लिटरेचर' नामकस्य ग्रन्थस्य प्रमथो भागः ॥

निर्माणेऽसाधारणो व्यापारः संलक्ष्यते"[1]। अपिच, "व्याकरणविज्ञाने न काचिदपि प्राचीना जातिर्भारतीयान् अत्यशेत, तच्च ख्रीष्टजन्मनो बहुशताब्दीभ्योऽपि प्राग् भारते वर्षे समधीयाञ्चक्रे। कोषनिर्माणकलायाश्चाप्यध्ययनम् अत्र बहुतिथात् कालात् पूर्वं प्रचारं प्राप[1]" ॥

(६) धर्मदर्शनोभयविकासज्ञानार्थं च संस्कृतसाहित्याध्ययनं प्रायोऽपरिहार्यं भवति। उक्तञ्च मैकडॉनलेन—"आरोपीयभाषाभाषिषु जनेषु भारतीयैरेव केवलं ब्राह्मण (वैदिक) धर्मो नाम महान् 'जनकीय'—(National) धर्मः, बौद्धधर्मो नाम महान् सार्वभौमधर्मश्च निरमायि। अप्रदर्शितधर्मविषयोपज्ञै र्जनान्तरैस्तु बहुतिथात् कालात् पूर्वम् अस्वदेशज एव धर्मः खलूरीकृतः। अथ महतीं मननशक्तिम् अभिव्यञ्जयन्ति स्वोपज्ञानि विविधदर्शन प्रस्थानानि अपि भारतीयैः सन्ततानि" ॥

(७) उपज्ञासमृद्धं खलु संस्कृतसाहित्यम् इति तु साहित्यान्तराद् अन्योऽस्य विशेषः। ख्रीष्टात् प्राक् चतुर्थशताब्द्यां भारतवर्षोपरि सञ्जाताद् यवनाक्रमणात् पूर्वमेव नूनम् आर्यसभ्यता प्रौढिम् अवाप, न च ततः प्रभृति जातुचिद् देशान्तरिणाम् केनचिद् आक्रमणेन अस्यां संसर्गदोषः उदियाय ॥

(८) उपलभ्यमानम् एव संस्कृतसाहित्यं परिणाहतुलया एकीकृतं समग्रम् अपि रोम–यवनोभयसाहित्यम् अतिशेतेतराम्। यदि च साहित्येऽत्र सर्वथा प्रणष्टानां तत्र तत्र चोल्लिख्यमानानां सन्दर्भाणाम् अपि समावेशः क्रियेत तदा अस्य व्यतिरेके किमु वक्तव्यम्।

(९) अभिहितं च मैकडॉनलेन—"सर्वेषाम् अपि सनातनानां साहित्यानां मध्ये संस्कृतसाहित्यं मौलिकतामूल्येन सौन्दर्यगुणप्रकर्षेण च यवनसाहित्यम् एकं हि अपोह्य न कस्माच्चिदपि साहित्यान्तराद् अपकृष्यते। मानव प्रकृतिविकासानुशीलनस्य प्रधानसाधनतया तु तावदेतद् यावनाद् अपि साहित्याद् निस्संशयम् उत्कृष्यते" ॥ इति ॥

(१०) विलक्षणा खलु सातत्यगतिरार्यसभ्यतायाः दरीदृश्यते। प्रार्थनोपासनाः, गायत्रीमन्त्रजपः, जननीजठरे शरीरग्रहम् आरभ्य आशरीर त्यागाद् आर्य (हिन्दू-) जीवनं विशिंषन्तः षोडश संस्काराः, अरणीभ्यां हव्य-

१—परामृश्यताम् उद्दिष्टपूर्वो ग्रन्थः ॥

वाहो जननं श्रौतगृह्याणि बहूनि विध्यन्तराण्यपि च बहुसहस्रवर्षपूर्वभवं विधिमनतिक्रम्यैव यावदद्य प्रवर्तन्ते। शास्त्रीयविवादेषु, सम्वादपत्रिकासु, स्वकीयपत्राचारेषु च क्रियमाणः कृतविद्यैः कोविदैः संस्कृतभाषायाः प्रयोगः मुद्रणयन्त्रेषु प्रचुरप्रचारं प्राप्तेष्वपि हस्ताङ्कितसंस्कृत-सन्दर्भाणां हस्तप्रतिलिपिविधानं, ग्रन्थविलोपावसरे शब्दशः सकलशास्त्रपुनराविर्भावार्थं निखिलनिगमाऽऽगमानां कण्ठाग्रे स्थापनं चेत्येतत् सर्वं भारतीयानां पूर्वोक्ताम् इमां विशिष्टां प्रवृत्तिं निदर्शयति। तस्माद् भारतीयानाम् अतीतसभ्यताम् अनुसन्धातुं हिन्दूनाम् इदानीन्तनीं संस्कृतिं च समवबोद्धुं संस्कृतभाषाया अध्ययनं सुतराम् प्रयोजकं सम्पद्यते ॥

(११) न खलु तावतैवाऽलम्। यूरोपीयसंस्कृतिदर्शनयो र्विकासं विज्ञातुमपि संस्कृतभाषाऽध्ययनं नितरां व्यपेक्ष्यते। तथा चोक्तं विंटरनिट्ज़महाशयेन, "यदि अस्माकं स्वसंस्कृतेः उपक्रमप्रक्रमाः बुभुत्सिताः, यदि अस्माकं पुराणतमभारोपीयसंस्कृतिः विविदिषिता, तदा यत्र भारोपीयजनानां वर्षिष्ठं वाङ्मयं सुरक्षितं तद् भारतवर्षमेव खलु अस्माकं गतिः", इति ॥

# अथ द्वितीयः खण्डः

## प्रतीच्येषु संस्कृतसारस्वतसम्प्रभावः।

ख्रीष्टस्य अष्टादशमशताब्द्याः चरमचरणे प्रतीच्येषु संस्कृतसाहित्यस्य प्रचारः प्रारब्धः, स च इतिहासजन्मनोऽपि प्राचः भारतयूरोपोभयदेशवास्तव्यजनानाम् इतरेतरसम्बन्धस्य नाना रूपाणि उद्द्योतयन् अभिनवयुगप्रवर्तकः सञ्जातः।

अनेन हि तत्र तुलनात्मकभाषाविज्ञानस्य बीजम् उप्तम्, तुलनात्मकपौराणिकविज्ञानस्य रूपं परिवर्तितम्, पाश्चात्यसुमनसां मतिकलिकानां कश्चिद् नवोन्मेषः कृतः, भारतीयपुरातत्त्वानुसन्धाने पश्चिमविपश्चितां चेतस्सु चिरस्थास्नू रुचिरुत्पादिता ॥

### (क) तुलनात्मकभाषाविज्ञानम्।

यावत् प्रतीची संस्कृतपरिचयेन अननुगृहीता अभूत् तावद्धि "अस्माकमेव ग्रीस्तावल्लोके मूलप्रकृतिः, सर्वाः अपि खल्वन्या भाषा अस्या विकृतयः"

इति आर्वदी[1]--हिब्रू--प्रभृतिभाषाणां भाषिणः प्रसह्य ब्रुवते स्म। सम्यगनुसन्धानेन तु "ग्रीकलैटिनयोः आर्वदी-हिब्रूभ्यां सह अन्वयो दुर्घटः इति, तयोः प्रकृतत्वं दुरुपपादम्" इति च अभवद् धारणा सूक्ष्मेक्षिकया प्रेक्षकाणाम्। अत्रान्तरे मठान्धकारे दीपेन घट इव पाश्चात्यानुसन्दधानानां संस्कृतसंस्तवे सति तन्मृग्यमाणो भाषापरम्परा-विषयको गूढोऽर्थः तत्पुरः प्रकाशितोऽभूत्। ततश्च "संस्कृतभाषैव मूलम्, तदन्वितानि च सर्वाणि भाषान्तराणि अमुष्याः प्रसृतयः" इति केचित् प्रातीच्याः सहसा निरधारयन्। परं गम्भीरविचारणया तेषां "संस्कृतवाणी तज्जातीयानाम् अमूषां वाणीनां ज्येष्ठा सोदर्या न तु प्रसूः" इति सम्प्रधारणा अजनि। ततः प्रभृति तुलनात्मकं भाषाध्ययनं सारवतोऽर्थान् विषयीकुर्वाणस्य विज्ञानस्य रूपम् उपादाय प्रौढिम् अभजत्। अथ लाघवार्थं 'भारोपीयवर्ग'-इति नाम्ना ख्यातिं नीतम् अमुं भाषावर्गम् एव ट्यूटानिकभाषावर्गः अन्वेति इति 'रास्कः' तदनन्तरं च ग्रिमः' अनुसन्दधे। अर्म्रियन-आस्कन-अल्वान्यन-लिथ्वैन्यन-आर्मीन्यन--फ्रिज्यन--टोखारिश-प्रभृतयः नानाभाषाः (अवेस्ता-ग्रीक-लैटिन-भाषाश्च वै अध्याहार्याः) भाषाविद्भिः एतेनैव वर्गेण सह अन्वयं लम्भिताः; हिट्टाइट ( Hittite )-सुमेयन-प्रमुखाश्च अपरा अपि भाषा अनागते काले लम्भिताः स्युः इति तावत् सर्वथा सम्भाव्यते ॥

## (ख) तुलनात्मकपौराणिककथाविज्ञानम्।

तुलनात्मकपौराणिककथाविज्ञानस्य समुन्नयने तुलनात्मकभाषाविज्ञानेन महत् साहाय्यं सम्पादितम्। संस्कृतभाषायाः 'देव'-'भग'-'यज'-'श्रद्धा' प्रभृति शब्दानां एतद्वर्गीयभाषान्तरधार्मिकनानाशब्दानां च सवर्णाः प्रचुरसंख्याकाश्शब्दाः भारोपीयभाषायाम् उपलभ्यन्ते इति, बह्व्यो देवताश्च भारोपीयभाषायुगीयाः सन्ति इति च तावद् आधुनिकानुसन्धानेन विज्ञायते। तथाहि, पृथिवीमातर्, अश्विनौ, पर्जन्यः, वरुणः इति संस्कृत देवतानां सवर्णाः क्रमेण 'टैरा मेटर्' Terra mater (लैटिनभाषा), 'डायोस्-कुरि' Dios-curi (लैटिनभाषा), 'पर्कुन्यूज' Perkunyja (लिथ्वैन्यनभाषा), 'औरेणस' Oupavos (ग्रीकभाषा) च भवन्ति।

---

1—आर्वदी=अरबी। अर्वदः, (अश्वदः), तस्येयम् आर्वदी। 'अर्वदः' इत्यस्यैव अपभ्रंशः 'अरब', इति भाति ॥

उदाहृता भारोपीयदेवताः प्रायेण विविधासु भाषासु समानानि स्वरूपलक्षणानि बिभ्रतीति वै महदाश्चर्यम् ॥

(ग) पाश्चात्यधारणासु प्रभावः

उपनिषदो नाम भारतवर्षविबुधाणां वरिष्ठं गरिष्ठं च ज्ञानम् । दाराशिकोहः अष्टादशशताब्द्या उपमध्यं पारसीकभाषायां तासां रूपान्तरम् अकारयत् । ततः 'अङ्क्वेटिल डू पेरनः' (Anquetil Du Perron) ख्रीष्टीय १७५५ तमे वर्षे तस्य रूपान्तरस्यापि रूपान्तरं लैटिनभाषायां प्रणिनाय । एतद्धि खलु महद् अर्थवज्जातम् । यतो हि शोपनहारः (Schopenhaure) केवलं रूपान्तरं ह्यदोऽधीत्य उपनिषदां गूढं तत्त्वम् अधिगम्य, "एतद् वै तद् यन्मे ध्रियमाणस्यापि सान्त्वहेतु म्रियमाणस्यापि च सान्त्वहेतु भविता" इति समुदीरयामास । अथ शोपनहार-प्रतिपादितं दर्शनम् औपनिषदीविद्यया बलवत् प्रभावितमभूत् किल ।

अथ शार्मण्यशेमुषी भारतीयां प्रतिभां भृशम् अनुहरन्ती दृश्यते तावद् तत्त्वद्रष्टृभिः । तथा च अभ्युक्तं 'लोपोल्ड् वान् श्राडरेण' (By Leopold Von Schroeder), "प्राञ्च उत्प्रेक्षाशालिनः (Romanticists) खलु भारतीयाः, नव्याश्च शार्मण्याः" इति । भारतीयेषु शार्मण्येषु च समानैव मनननिदिध्यासनप्रवृत्तिः, तुल्यैव च सर्वभूतात्मानुरक्तिः (संसारस्य दुःखमयत्वम्- सौगतानां मूलाभ्युपगमः) समवलोक्यते । अथ शार्मण्यकाव्येषु संस्कृतकाव्येषु च उभयत्रापि अविप्रकृति यादृशं भावकत्वं संवेदनशीलत्वं च परिभाव्यते ग्रीककाव्यानि हिब्रूकाव्यानि च सर्वथा तद्वञ्चितानि वीक्ष्यन्ते ॥

(घ) प्राचीन शिलादिलेखानुसन्धानम् ।

संस्कृतज्ञानधनिनो यदि नाभविष्याम, अधिप्राचीनभारतं यज्जानीमोऽद्यत्वे, स्वल्पीयस्तस्माद् अज्ञास्याम इति वचने का अत्युक्तिः । प्राचीनशिलादिलेखविषयकम् अस्माकं ज्ञानं प्राचीनभारतावस्थासम्बन्धि च नः संवृद्धम् अनुसन्धानं प्रातीच्यविद्याधनानां साधूनाम् अधमर्णम् इत्यत्र को नाम विप्रतिपद्येत । परं विषययोरनयोः सकला पाश्चात्यवैदुषी संस्कृतभाषाध्ययनप्रयोज्यभावनातरंगोत्थापितैव इति कस्य विमतं भवेत् ॥

(ङ) अविशेषम् ।

(१) पाणिनीयाष्टाध्यायी मधीत्य हरिवर्षवास्तव्यानां सरस्वतीसेवकानां

खान्ते 'स्वभाषाव्याकरणवैकल्यदोषस्तावद् यथाशक्यं प्रमार्जनीयः' इति भाव उदियाय ॥

(२) कर्तुः कृतित्वं व्यञ्जयन्तीं कालिदासस्य श्रेष्ठां कृतिं शकुन्तलाम् अनुशील्य पाश्चात्याः प्रस्ह्य नाम उपतुष्टुवुः। शकुन्तलाशैलीम् अनुसृत्यैव च 'गेटेः' (Goethe) 'फास्ट' नाम्नः स्वसन्दर्भस्य प्रस्तावनां विरचयामास। संस्कृत सन्दर्भाणां शार्मण्यभाषानुवादः शार्मण्यसाहित्यं भूयिष्ठं प्रभावयति स्म। 'फ० श्लेजल' (Schlegel) नामा शार्मण्यः कविः संस्कृतकाव्यानि शार्मण्यभाषायां खलु अनुकवयति स्म ॥

(३) संस्कृतभाषाप्रबद्धा वै 'महायान' सम्प्रदायस्य प्रामाणिकाः प्रबन्धाः। अथ हरिवर्षीय विविधभाषासु तदनुवादः पाश्चात्यसौगतानां मनांसि बलवद् अहार्षीत् ॥

(४) आ वैदिकग्रन्थेभ्य आ श्रेण्य (Classical) सन्दर्भेभ्यो निखिलः खलु संस्कृतसारस्वतमहार्णवः पश्चिमविपश्चित्कर्णधारैः सम्वत्सराणाम् उपद्विशते समवगाहितः। वेदानां, ब्राह्मणानाम्, उपनिषदां, रामायणस्य, महाभारतस्य, पुराणानां, गीतिकाव्यानां, लोकमनोरञ्जकाख्यायिकानाम्, औपदेशिकपशुकथानां, वैज्ञानिकसन्दर्भाणां, किं बहुना यत्सत्यं संस्कृतसाहित्याङ्गिनः सर्वेषाम् अङ्गोपाङ्गानाम् अनुवादाः, टिप्पण्यः, सामीक्षिकसंस्करणानि च (Critical editions) तासु तासु हरिवर्षीयभाषासु संवृत्तानि। अस्तोकेन च तेषां प्रभावेण तत्रत्येषु मनीषिषु नूनं भवितव्यम् ॥

# अथ तृतीयः खण्डः

## संस्कृतसाहित्ये तिथिक्रमाभावः

हन्त संस्कृतसाहित्यानुसन्धातृभिः कृतेऽपि तादृशसामीक्षिक (Critical) मार्गणागणे तथाविधक्लेशश्लेषविषमे च प्रचुरप्रयासे संस्कृतसाहित्यस्य इतिवृत्तं यावदद्य अनापद्यमानं प्रकाशपद्यां वेविद्यते। नानानिर्णायकैः निर्णीतेषु कविकुलतिलकस्य कालिदासस्य इव कविताकामिनीकान्तस्य भासस्य अपि कालेषु न केवलं पञ्चषाणां दशाब्दीनां प्रत्युत शताब्दीनाम् मिथोन्तरं समुपलभ्यते। "संस्कृतसाहित्येतिहाससम्बन्धिन्यः सर्वास्तिथयस्ताः समुण्डसूच्यः

( Pins ) खलु, याः पुनः उद्धरणायैव कर्गलेषु जटिताः भवन्ति'।" प्रस्थानान्तरेषु परमप्रकर्षप्राप्तम् अपि संस्कृतसाहित्यम् इतिहासे नितरां शोच्यावस्थं तावद् दृश्यते; तथाहि अंगुलिगण्याः प्रथमम् इतिहासप्रबन्धाः, अथ तेऽपि कल्पनाबहुलाः। अहो बत भारतीयैतिहासिकानां मूर्धन्यायमानः कह्लणः 'हीरोडोटसस्य' अपि तुलां नाधिरोहति ॥

तत्र हेतवः। दुर्वचाः खलु संस्कृतसाहित्यस्य इतिहासदारिद्र्यस्य अप्रत्याख्येयहेतवः इति अभ्युपगच्छन्तोऽपि एतावद्धि तावदवश्यं विवक्षामः—

(१) इतिहासशब्दस्य योऽभिप्रायः अद्यत्वे गृह्यते न स पुरा भारतीयैः गृहीतः। नृपाणां विश्रुतानां जनानाञ्च चरितकथायाः निबन्धने भारतीयानां प्रवृत्तिः पुरा न कदाप्यभूत्, यो हि तैः अप्रमत्तं सोत्साहं च परिरक्षितयोः आर्यसभ्यतासंस्कृत्योः सम्वर्धने सुष्ठु साहाय्यं सम्पादयामास तस्य तु चरितं सुगीतं तैः। तथाहि अध्यात्म भारतीयसम्प्रदायानां विस्तृतं यथाथ च यादृशं चरितानुकीर्तनं संस्कृतवाङ्मये लोचनगोचरी भवति तादृशं न क्वचिदपि अन्यत्र जगतः सर्वासां भाषाणां साहित्ये दृष्टिपथम् अवतरति[२] ॥

(२) कर्मसिद्धान्तः, भाग्यराद्धान्तः, ईश्वरेच्छाकृतान्तः, मन्त्र-तन्त्र-क्रिया विश्वासः, एतद्युगीनवैज्ञानिकमतेरनुदयः इत्येवमादयो बह्व्यो विशिष्टा वैदिकबौद्धजैनानां मनोवृत्तयः परिस्थितयश्च संभूय संस्कृतसाहित्ये इतिहासानुपलब्धेः ईषद् हेतुतां व्रजन्ति ॥

(३) आख्रीष्टीयद्वादश शताब्दि भारते घटमानानां राजनीतिकघटनानां क्रमश्च अपि नाम तथा बभूव यथा तेन न काचित् विश्वजनीना प्रवृत्तिः प्रादुरभूत्।

(४) भारतीयानां हृदयेषु राष्ट्रीयत्व-भावनाया अभावश् च अत्र महान् हेतुर् अस्ति। अलक्षेन्द्रस्य (सिकन्दरस्य) भारते विजयानां प्रभावो न इह चिर-स्थास्नुर् अभवत्; न च अन्यैः विदेशिभिर् आततायिभिर् भारते

---

१—लेपज़िगनगरे १८७९ तमेऽब्दे मुद्रितस्य 'व० द० ह्विटनी' कृतस्य संस्कृत-व्याकरणस्य भूमिकातः। पञ्चाशतोऽप्यधिकेभ्यो वर्षेभ्यः पूर्वं प्रकाशितं मतमेतत् साम्प्रतमपि तथावदभ्युपगन्तव्यं भवति ॥

२—'भारतीया इतिहासविद्यां न विदु'रित्यनुक्त्वा 'तेषामितिहासशब्देन न खलु तस्यार्थस्य ग्रहो बभूव यस्य हरिवर्षीयाणां भवती'ति वक्तव्यमिति फलितं तर्केणानेन ॥

कृतेर् आक्रमणैर् इहत्यायां जनतायां राष्ट्रीयत्व-भावनाया उदयोऽजनिष्ट। 'भारतीय-भूपाला न तथा विदेशिभ्योऽद्रुह्यन् यथा अन्योन्येभ्यः' इत्येतच्च अपिनाम मुसल्मानानां भारतोपरि विजय-लाभे मुख्यं कारणं बभूव।

(५) कालेन दूरं नीतानां प्राचीनानां स्व-पूर्व-क्षितिपतीनाम् इतिहासेषु तत् प्रशस्ति-काव्येषु च न साधारण-भारत-जनताया उचिता प्रीतिर् अभूत्। तस्मात् स्थायिनीं कीर्तिं लिप्सवः कवयो न तथा स्व-सम-काल-भवानां नृपाणां चरितानि स्व-प्रबन्धानां विषयत्वेन उपाददते स्म यथा रामायण-महाभारतादि प्राचीन-ग्रन्थ-वर्णितानाम्[१]।

(६) भारतीयानां विशेषापेक्षया सामान्येऽधिका या प्रीतिर् दृश्यते साऽपि अत्र हेत्वन्तरतां व्रजति। तथाहि, यदा हि द्वौ प्रति-द्वन्द्विनौ पक्षौ ऊहापोहस्य विषयीभवतः, तदाऽपि व्याख्यातृणां जीवनेतिवृत्तानि सर्वथा उपेक्ष्य केवलं विवादीया युक्तय एव किल प्रस्तूयन्ते। दार्शनिकाणां नाना-सम्प्रदायानां व्याख्यानावसरेषु चाऽपि ऐतिहासिकः कालः पृष्ठतः कृतो भवति।

(७) प्राचीनवाङ्मयस्य च बहुतर-संख्याका ग्रन्थाः कुटुम्ब-विशेषस्य वा सम्प्रदाय-विशेषस्य वा मठ-विशेषस्य वा दाय-सम्पत्तिभूता नु उपलब्धिं गताः, येषां प्रणेतृणां नामोल्लेखम् अपि हन्त नोपलभामहे।

(८) परम-प्राचीन-वाङ्मयापेक्षया अर्वाचीने वाङ्मये च यदि क्वचिद् ग्रन्थ-निर्मातृणां नामानि किल श्रुति-पथम् अवतरन्ति, तान्यपि, न खलु व्यक्ति--विशेषाणाम्, अपितु कुटुम्ब-विशेषाणां (गोत्र-विशेषाणां वा) उपाख्यात्वेन परिगृह्यन्ते।[२] अभूवंश्च भोज–विक्रमादित्यादि–नाम–धारिण्योऽनेकाः व्यक्तय इह। 'अमुकः कविर् भोजस्य विक्रमादित्यस्य वा काले खलु जातः' इत्येतावन्मात्रे उपलब्धेऽपि ऐतिहासिक-ज्ञाने न तेन वस्तुत ऐतिहासिकत्वं तज्ज्ञानस्य सिध्यति।

---

१. तथाहि—साहसांकचरितं नाम ऐतिहासिकं काव्यं विस्मृति-गर्भे निलीनं वरीवर्ति, नैषधीय चरितं नाम पौराणिक-कथाश्रयं काव्यं च नाना—टीका-विभूषितं सत् पण्डितमण्डली-हृदय–हारीभूतं खलु दृश्यते।

२—देशान्तरेषु इव भारतेऽपि खण्डे अद्यापि एष व्यवहारो दृश्यते यद् ग्रन्थकाराणां नामानि प्रायः गुप्त—शर्मा—राय—चक्रवर्ती—प्रभृतिभिर् 'उपपदैः' एव प्रथितानि सन्ति। न समस्त-नाम-प्रकाशने तथा महत्वं संभाव्यते यथा उपपद-प्रकाशने।

(९) यदि च क्वचित् पुनः कस्यचित् कवेर् ग्रन्थकारस्य वा नामधेयं तत्प्रणीतग्रन्थे उपन्यस्तम् आलोक्यते, न तस्य मातुः, पितुः, वंशस्य, जन्मभुवः, शिक्षायाः, स्वभावादिकस्य च विषये किञ्चिद् उल्लिखितं लभामहे।

(१०) दृश्यते च कदाचित् एकस्यैव नगरादिकस्य सार्थकैर् नाना नामभिर् व्यवहारः[1]।

एवंगतेऽपि 'नहि भारतीयेषु ऐतिहासिकी बुद्धिरासीद्' इति न जातुचिद् अवसेयम्। इतिहास-विद्या-साहित्ये हि न केवलं विपुलकायानि बहूनि पुराणानि ग्रन्थान्तराणि च, अपितु निश्चित-तिथि-युता अनेके शिला-लेखा अपि इह विद्यन्ते[2], ज्यौतिष-ग्रन्थकाराश् च स्व-ग्रन्थ-परिसमाप्तीनां यथावत् तिथीः खलु निर्दिशन्ति स्म॥

# अथ चतुर्थो खण्डः

## संस्कृतभाषा आधुनिक्यो भाषाश् च

'संस्कृत'-शब्द-प्रयोगस्य आरम्भ-कालम् अन्विष्यन्तो वयं शब्दम् इमं पाणिनेर् अष्टाध्याय्यां वाल्मीकेश् च रामायणे प्रयुक्तं सर्वतः प्रथमं पश्यामः। अस्य व्युत्पत्ति-लभ्यश् चार्थः—'एकत्र सञ्चितम्' इति, 'स्निग्धं कृतम्' इति, 'परिमार्जितम्' इति, वा भवति। एतत्-प्रतिद्वन्द्विनः 'प्राकृत'-शब्दस्य चार्थः 'नैसर्गिकम्' इति, 'अकृत्रिमम्' इति वा भवति। अत एव 'प्राकृत'-शब्देन भारतवर्षस्य भाषित-भाषा गृह्यते या हि खलु साहित्यिक्या भाषातः रूपेण भिद्यते।

वैदिके हि काले आर्याणां भाषा 'वैदिक-भाषा'-नाम्ना व्यवह्रियते स्म। अद्यतनीनां च भाषाणां तुलनात्मकाऽनुशीलनेन ज्ञायते यत् 'सर्वाः खलु इमा भाषाः कस्याश्चिद् एकस्या एव भाषाया दुहितरः सन्ति' इति। तस्मात् संस्कृत-भाषाया इतिहास-मूलं जिज्ञासुभिर् अस्माभिः साम्प्रतम् उपलभ्यमानो लिखितस्य भाषा-स्वरूपस्य प्राचीनतम आदर्शः परीक्षितव्यो भवति। स च

१—संस्कृतपण्डिता आत्मनो लेखेषु वार्तालापेषु च प्रायः 'पञ्चनदः=पञ्जापः,' 'सुधासरः=पीयूषतटाकः (अमृतसर)' इत्येवं-विधानि नामानि प्रयुञ्जाना दृश्यन्ते।

२—विषयेऽत्र भूयो जिज्ञासुभिर् एकचत्वारिंशात् खण्डाद् आरभ्य पञ्चचत्वारिंशं खण्डं यावद् ग्रन्थोऽवलोकनीयः।

आदर्शः ऋग्वेदे खलु प्राप्यते। परम् 'ऋग्वेदस्य समग्रस्य छन्दोमयत्वात् न हि अत्र तदानीं भाषिताया भाषाया वास्तविकस्य स्वरूपस्य दर्शनं शक्यम्' इत्येतस्यां विप्रतिपत्तौ सत्यां, 'ऋग्वेदस्य भाषा छन्दोमयी सत्यपि तदानींतन्या भाषित-भाषातो नितरां भिन्ना भवितुं नाऽर्हति' इति तु न कस्यापि विमतं स्यात्। तास् ता अवस्था उत्तीर्य नानारूपेषु प्रादुर्भूतानां विविध-भारतीय-भाषाणां निम्न-न्यस्ता सारिणी एकदृष्टिपातेन सर्वा आर्य-भाषा-धारा-गतीः पिशुनयिष्यति।




'यथा यथा भाषा-विकासो वर्धते तथा तथा साहित्यिकी भाषा सर्वजन-भाषित-भाषातो भेदम् आप्नोति' इति तावत् सारिणीत एतस्याः स्पष्टं ज्ञायते।

विपश्चिद्वरा भाण्डारकर महाशया वैदिक-कालाद् अवर-काले

इदितं साहित्यं 'मध्यकालिक-संस्कृत-साहित्यं श्रेण्य'-संस्कृत-साहित्यं च' इति द्विधा विभाजयन्ति। ब्राह्मण-ग्रन्थेभ्योऽनन्तरं रामायण-महाभारताभ्यां च पूर्वं गतः कालो 'मध्यकालः' इति मत्वा ते मध्यकालिकं साहित्यं प्रकल्पयन्ति। कालेऽत्र मुख्यो ग्रन्थकारो वैयाकरणश् च सुगृहीतनामधेयः पाणिनिर् गण्यते। पाणिनेर् अर्वाचीनः कालः श्रेण्य-संस्कृत-कालतया व्यपदिश्यते। कालेऽत्र मुख्यौ वैयाकरणौ कात्यायनः पतञ्जलिश् च स्थाप्येते। सर्व-जनस्य भाषित-भाषाया विविधा दशाः पाल्या (पाली हि अशोकस्य शिला-लेखेषु व्यवहृता प्राप्यते), नाटकानां प्राकृतैः, अपभ्रंशैः, आधुनिकीभिश् च भाषाभिर् अभिव्यज्यन्ते। नाटकानां प्राकृतैश् च न खलु—तदानींतनीनां भाषाणां वास्तविक-स्वरूपाणि प्रकाश्यन्ते। प्रारम्भावस्थासु तावत् प्राकृतैर् लोकानां भाषित-भाषा एव नूनं प्रकाश्यन्ते स्म; किन्तु काल-क्रमेण तान्यपि, साहित्यिक-वैदिक-भाषावत् साहित्यिक-संस्कृत-भाषावच्च, तान्यपि व्याकरण-निगडितानि भूत्वा साहित्यिकोपभाषा मात्राणि जातानि; ततश् च केवलम् आधुनिक्यो भारतीया आर्यभाषाः भाषित-भाषाणां प्रतिनिधयोऽभूवन्। एषा विविध-दशा-परिवृत्तिस् तु शनैः शनैः खलु बभूव। तथाहि, पृथ्वीराज-रासो-नामकस्य चन्दवरदाई-कृतस्य महाकाव्यस्य भाषा शौरसेनी-नाम्ना व्यवह्रियमाणया 'अपभ्रंश'-भाषया बलवत् साम्यं बिभर्ति, इदानींतन्या हिन्दीतश् च दृढं भिद्यते। अधोविन्यस्तया तालिकया आधुनिकीनाम् आर्यभाषाणां विकास-पद्धतिः स्पष्टं व्यक्तीभविष्यति।

---

१—श्रेण्यां भवं श्रेण्यम्। वर्ग-विशेष-सबद्ध इति भावः।




1. एषा भाषा 'शिन'-भाषा-सदृशीं कामपि भाषां सूचयति ।

उपरि-न्यस्तायां तालिकायां प्रदर्शिता या आधुनिक्यो भाषाः ख्रीष्टीयस्य सहस्रतमवर्षस्य प्रत्यासन्नकाले विकसितुं प्रारब्धाः, न ता विभक्ति-प्रत्यययोर् बलेन अर्थं व्यञ्जयन्त्यो भाषा अभूवन्, प्रत्युत आंग्लादिभाषावत् तास्वपि, विभक्ति-प्रत्यययोः स्थाने, शब्द-प्रयोगेण खलु अर्थः प्रत्याय्यते[1]। उक्तं च बीम्जमहोदयैः—'संश्लेषण-प्रसूनं कोरकतया उद्भूय स्फुटितम्। सर्वांशेन च स्फुटितं भूत्वा, कुसुमान्तरवत्, म्लानिम् उपागमत्। अस्य दलानि, विभक्ति-प्रत्यया इत्यर्थः, एकैकशो विशुष्य अपतन्। यथाकालं च फलं, वैश्लेषिकी भाषा इत्यर्थः, उदियाय, उपचयं परिपाकं च प्राप्नोत्' इति।

'यदाऽपि भारते आर्य-भाषाः अनार्यभाषाश् च मिथः संमिलन्ति तदा पूर्वोक्ताभिर् उत्तरोक्ताः क्रोडी क्रियन्ते' इत्यनेन आर्यभाषाणां गुणोत्कर्षो दुरपह्नवः। अयत्वे च येषु देश-खण्डेषु जाति-द्वयस्य देशयोः सीमे सङ्गच्छेते तेषु एतत् पूर्वोक्तं भाषा-स्वरूपस्य विपरिवर्तनं नियमेन प्राग्रेसरद् अवलोक्यते।

अनार्यभाषा इति प्रायः-परिभाषिताः ( So-called ) द्रविड-शाखाकाः 'तैलुगु, तामिल, मलयालम, कनारी, इति चतस्रो भाषाः दक्षिणा-पथे प्रसिद्धाः प्रायेण संस्कृत-मिश्राः सन्ति जाताः॥

# अथ पञ्चमः खण्डः

## संस्कृतस्य भाषित-भाषात्वम्

'कियदंशं यावत् ननु संस्कृतं भाषिता भाषा बभूव ?' प्रश्नम् इमं प्रति-ब्रुवद्भिर् अध्यापकवरैर् ई० जे० राप्सनमहोदयैर् अभ्यधायि—'अस्माभिः प्रयुज्यमाना साहित्यिकी आङ्ग्लभाषा इवैव संस्कृतमपि नूनं भाषिता भाषाऽऽसीत्। संस्कृतं च पुरा भारते वर्षे पश्चिमोत्तर–दिग्भागे सर्वैर् जनैर् अभाष्यत। कृत्स्नेन हि संस्कृत-वाङ्मयेन अस्य विकासः स्पष्टं विज्ञाप्यते, अस्य च ध्वनि-विशेषैर् यद् वैशिष्ट्यं प्रतिभाति तदद्यापि पश्चिमोत्तरीये भारत-भागे समुपलभ्यमानेषु शिला-लेखेषु प्रायोऽक्षीणं प्रत्यक्षम् आलोक्यते।

१—विभक्ति-प्रत्यययोर् बलेन अर्थं द्योतयन्तीषु संस्कृतादिभाषासु प्रकृति-प्रत्ययानां समासानां च रचनायां संश्लेषस्य प्राधान्यात् बाहुल्याच्च यूरोपीयास् ताः 'सांश्लेषिक्यो भाषा' इति व्यपदिशन्ति। विभक्ति-प्रत्यय-स्थाने शब्द-प्रयोगेण अर्थं विज्ञापयन्तीषु हिन्दी-प्रभृतिषु भाषासु विश्लेषस्य प्राधान्यात् ता वैश्लेषिक्यो भाषा उच्यन्ते॥

आदौ किल संस्कृतं पश्चिमोत्तरभागे एव लब्धोद्भवस्य हिन्दु-धर्मस्य भाषा बभूव। हिन्दु-धर्मस्य प्रसारेण सह संस्कृतमपि प्रसारम् आप। जैन-बौद्ध-धर्मयोः प्रसारस्य काले कियत्कं कालं यावद् अस्य प्रसारोऽवरुद्धः। अथ तयोर् धर्मयोर् ह्रासे प्रारब्धे पुनः संस्कृतस्य उत्थानम् अभूत्। शनैः शनैश् च एतत् समग्रेऽपि भारते वर्षे लब्धास्पदं बभूव। तदेवम् या संस्कृत-भाषा आदौ कस्यचित् नगण्यस्य जनपदविशेषस्य भाषिता भाषा बभूव सैव कालक्रमेण जातिविशेषस्य धर्मविशेषस्य च भाषा भूत्वा अन्ततोगत्वा अखिलस्य भारत-वर्षस्य सर्वधर्म-राजनीति-संस्कृतीनां भाषा समजायत। कालेन विशाला राष्ट्रीय-भाषा सती एषा हिन्दु-राष्ट्रीयत्व-विनाशकानां केवलं मुसलमानानां शासन-काले आत्मनो गौरवशालिनः पदात् प्रभ्रष्टा बभूव" इति।

अथ वक्ष्यमाणा युक्तयः संस्कृतस्य भाषित-भाषात्वं साधयन्ति—

१—" 'मध्य-संस्कृतं 'श्रेण्य'-संस्कृतं च उभयमपि वैदिक्याः भाषाया अपत्ये खलु स्तः" इति तावद् निर्दिष्टचरम्। अथ तदेतद् उभयमपि बहुतिथं कालं यावत् शिष्टानां व्यावहारिकी भाषा अभवत्। 'पाली' इति नाम्ना 'नाटक-प्राकृतानि' इति नाम्ना च सङ्केत्यमानास् तदानींतन्यो सर्व-जन-भाषित-भाषा अपि आभ्यां प्रभाविता अभूवन्[1]"।

२—यास्काद् आरभ्य सर्वे प्राञ्चो वैयाकरणाः संस्कृतं 'भाषा' इति व्यपदिशन्ति। 'भाषा' शब्देन च विश्वजनीनं दैनंदिन-व्यवहार-साधकं शाब्दिकं साधनं विहाय किं ग्राह्यम् ?

३—पाणिनि-प्रोक्तस्य व्याकरणस्य बहवो विधयो[2] जीवित-भाषा-विषयमात्रे चरितार्था भवन्ति, नाऽन्यत्र।

४—(ख्रीष्टात् पूर्वं द्वितीयशतके भवेन) पतञ्जलिना संस्कृतं लोक-व्यवहृता भाषा उक्ता, स्व-शब्दाश् च लोक-प्रसिद्धाः शब्दाः।

५—भाषित-भाषासु तत्तद्-देश-निमित्तका ये विशेषा दृश्यन्ते ते संस्कृतेऽपि खलु आसन् इति ज्ञायते। तथाहि यास्कः पाणिनिश् च 'प्राच्येषु' 'उदीच्येषु' इति देश-नाम-निर्देश-पूर्वकं तांस्तान् विशेषान् स्पष्टं सङ्केतयतः।

---

१—तथाहि, नाटकीयेषु प्राकृतेषु ऋद्धि-सुदरिसन-प्रभृतयः शब्दा उप-लभ्यन्ते, पाल्यां च तत्सदृशा एव इद्धि-सुदस्सन-प्रभृतयः। 'ऋद्धि-सुदरिसन-प्रभृतयः शब्दाः इद्धि-सुदस्सन-प्रभृतिभ्यः शब्देभ्यो निष्पादिताः सन्ति' इति तु साधयितुम् अशक्यम्। तस्माद् 'ऋद्धि-प्रभृतयः शब्दाः संस्कृतशब्देभ्य एव निष्पादिताः सन्ति' इत्येव अभ्युपगन्तव्यं भवति।

२—तथाहि, दूरात् सम्बोधने वाक्यस्य अन्तिमः स्वरः प्लुतो भवति।

कात्यायनेनाऽपि जनपद-विशेषान् प्रयोग-विशेषाः प्रदर्शिताः, पतञ्जलिना च तत्तन्मण्डलमात्रे व्यवहारम् आरूढाः शब्दाः सङ्गृह्य स्वभाष्ये न्यस्ताः ।

(६) श्रूयते किल कथासु यद् भिक्षुभिः 'संस्कृतभाषा भगवता आत्मनो भाषित-भाषात्वेन उपादेया' इति भगवान् गौतमोऽभ्यर्थितः । अनेनापि 'संस्कृतं भगवद्-बुद्ध-काले भाषिता भाषा बभूव' इति फलितं भवति ।

७—स्वग्रन्थानां प्रचुरं प्रचारम् अभिवाञ्छता ख्रीष्टीय-द्वितीय-शतक-जातेन कवि-तार्किक-चक्रवर्तिना अश्वघोषेण पाल्यादिकं विहाय संस्कृतमेव स्व-रचनायाम् आश्रितम् । अस्माद्धि अनुमीयते यत् तदा प्रजासु संस्कृतस्य यावान् समादर आसीत्, न तावान् पाली-प्राकृतादिकस्य; संस्कृतेन च प्रणष्ट-पूर्वम् आत्मनो गौरव-पदं पुनः प्राप्तम् आसीद् इति ।

८—ख्रीष्टीय-द्वितीय-शतकाद् अर्वाचीने काले ये शिला-लेखा उत्कीर्णा अभूवन्, तेषां मध्याद् ये प्रकाशम् आगतास् तत्र संस्कृते बहवः, पाल्यादिषु च अल्पतराः दृश्यन्ते । ख्रीष्टीय-षष्ठशतकाद् अवरकालिकानां शिला-लेखानां तु, जैन-शिला-लेखान् वर्जयित्वा, सर्वे संस्कृते लिखिता उपलभ्यन्ते । 'शिला-लेखानां च भाषया तथा भवितव्यं यथा सा लोकेन सुपठा सुगमा च स्यात्' इति तु न कस्यापि विमतं भवेत् ।

९—उत्तरीय-भारतवर्षस्य बौद्धानां ग्रन्थाः प्रायः संस्कृते उपनिबद्धा अवलोक्यन्ते । तेन हि ज्ञायते यद् न बौद्धेषु अपि ये संस्कृत विरोधिन आसन् तेषां प्रयत्नः फलवान् अभूद् इति ।

१०—ख्रीष्टीय-सप्तम-शतके मौखिकेषु शास्त्रीयेषु वादेषु बौद्धैः संस्कृतमेव प्रयुज्यते स्म इति तावद् ह्यूनसाङ्गस्य भारत-यात्रा-वर्णनेषु स्पष्टम् उपन्यस्तं पश्यामः । तदानीं च प्राकृतं सर्वथा अत्यक्तवन्तः सन्तोऽपि जैना अपि संस्कृतेन व्यवहर्तुं प्रारभन्त ।

११—संस्कृतनाटकेषु पात्राणां सामाजिकीं स्थितिम् अनुरुध्य तद्-भाषण-योग्यानि विविधानि प्राकृतानि प्रयुक्तानि दृश्यन्ते । नायकाः, उच्च-पदाधिकारिणः, तपस्विनः, तपस्विन्यः, एवंविधानि पात्रान्तराणि च संस्कृतम् आश्रित्य ब्रुवन्ति । स्त्रियः, अवर-स्थितिकानि च अन्यानि पात्राणि प्राकृतैर् एव व्यवहरन्ति । तेन हि ज्ञायते यद् ये न संस्कृतेन व्यवहर्तुं शक्ता अभूवन्, तेऽपि जनाः संस्कृतेन प्रकाशितं वक्तुर् अभिप्रायम् अवश्यम् तत्क्षणम् अबोधन् इति । अन्यच्च, 'संस्कृत-नाटकानि पुरा अभिनीतानि अपि अभवन्' इत्येतत्साधकानि नाना प्रमाणानि उपलभामहे । अथ अभिनये सति सामाजिकैः संस्कृतभाषितार्थोऽपि अवश्यं बोद्धव्यः, अन्यथा कथं

नु तेषां रसास्वादः स्यात् ? तदनेनापि संस्कृतस्य सर्व-लोक-गम्यत्वं स्वयम् आयाति ।

१२—'रामायण-महाभारतयोर् मूल-श्लोकानां पाठमात्रं लोक-समक्षं समभवत्' इत्येतच्च बहुभ्यः प्रमाणेभ्यो विद्मो वयम् । एवं हि सति 'संस्कृत-श्लोकार्थः श्रोतृभिर् अवश्यं झटिति गृह्यते स्म' इत्यत्र कः संशयीत ।

आभिर् युक्तिभिर् ज्ञायते यद् आहिमगिरेर् आविन्ध्याद्रेर् आर्यावर्त इति नाम्ना यो भूभागोऽस्ति प्रसिद्धः, तत्र पुरा संस्कृतं लोक-भाषा बभूव, यां न केवलं ब्राह्मणाः[1], अन्येऽपि सर्वे जनाः भाषन्ते स्म, अवगच्छन्ति स्म च इति । अस्ति च पतञ्जलिना प्रोक्ता एका कथा यत्र कोऽपि रथवाहकः केनचिद् वैयाकरणेन सह 'सूत'-शब्दस्य व्युत्पत्ति-विषये विवदते । श्रूयते च लोक-वार्तासु यत् कदाचिद् महाराजो भोजः कञ्चन काष्ठ-खण्डान् विक्रीय जीविकाम् अर्जयन्तं पुरुषम् एकदा शिरसा काष्ठ-भारं वहन्तम् आलोक्य अनुकम्पाविष्ट-हृदयस् तं पृष्टवान्—'कच्चिद् भारो न बाधति ?' इति । आत्मनेपदिनो बाधतेः परस्मैपदितया व्याकरण-विरुद्धं प्रयोगं श्रुत्वा खेदं मन्यमानः स प्रत्यब्रवीत्—"भारो मां तथा न बाधते, यथा 'बाधति' बाधते" इति । 'खीष्टीये सप्तमे शतके बौद्धैर् जैनैर् अपि संस्कृतेन व्यवहर्तुं प्रारब्धम्' इति तावद् अभिहितं पुरा । अद्यत्वेऽपि पण्डित-तल्लजाः मिथः संलापे, विशेषेण च शास्त्र-चर्चायां सर्वदा, संस्कृतेन एव व्यवहरन्ति । विषयम् इमम् उपसंहरद्भिर् अस्माभिर् एतावदेव तावदन्ते वक्तव्यं यद् आद्य-दिनाद् आरभ्य अद्य यावत् सैव स्थितिः खलु संस्कृतस्य आसीद् अस्ति च या 'ज्यू' (Jew)-जातौ हिब्रू भाषाया अस्ति, यूरोपीयेतिहासस्य च 'मध्य'-काले लैटिनभाषाया आसीत् इति ।

# अथ षष्ठः खण्डः

## श्रेण्यसंस्कृतलक्षणम्

भारतीय साहित्येतिवृत्तं तावद् 'वैदिककालः श्रेण्यसंस्कृतकालश्च' इति कालद्वयेन द्विधा विभज्यते । पाणिनेः प्राक् प्रथमः, परतश्च अपरः कालो गण्यते । आद्ये हि वेदाः, ब्राह्मणानि, आरण्यकग्रन्थाः, उपनिषदः, कल्पाश्चेति

१—पतञ्जलेः 'शिष्ट'-शब्दोऽत्र विचारणीयः ।

मारस्वतं समावेश्यते। द्वैतीये च रामायणमहाभारते, पुराणानि, महाकाव्यानि, रूपकाणि, गीति[1]काव्यानि, कथाः, आख्यायिकाः, चरितानि, पञ्चतन्त्रादि-मनोरञ्जनशिक्षा-नीतिग्रन्थाः, व्याकरणानि, शिक्षाः, आयुर्वेदः, धर्मशास्त्राणि, ज्यौतिषग्रन्थाः, गणितप्रकरणानि चेत्यादिकं भूयिष्ठं साहित्यं समावेशमाप्नोति। द्वयोश्चानयोः देहात्मविषयशैलीतिचतुष्कस्य मिथो भेदान् परस्परं भेदो यथा प्रदर्शितो भवति तथा संक्षेपेण चतुष्कमेतद् अधस्ताद् निरूप्यते। अथ तत्र—

(क) अधिदेहम्। समग्रः खलु ऋग्वेदश्छन्दोबद्धः। गद्यस्य तु प्रयोगः शनैः शनैः विकासमापत्। यजुष्षु ब्राह्मणेषु च गद्यं प्रायः प्रौढिं प्राप्तं दृश्यते। उपनिषत्स्वपि अस्य आंशिकः प्रयोग उपलभ्यते, परं श्रेण्ये संस्कृते प्रायेण अस्याभाव एव संल्लक्ष्यते। तत्र हि आयुर्वेद-धर्मशास्त्र-सदृश्यो विद्या अपि पद्यनिगडिताः निशाम्यन्ते। गद्यन्तु केवलं दर्शनेषु व्याकरणे च प्रहेलिकायमानया दुरवबोधकुटिलितया च शैल्या प्रयुज्यमानं प्राप्यते। कथाख्यायिकादिषु पञ्चतन्त्रादिषु रूपकेषु च यद्यपि साहित्यिकं गद्यं व्यवहृतं विलोक्यते तथापि तदेतद् दीर्घसमास-बहुलत्वाद् ब्राह्मणग्रन्थस्थगद्येन सम्यक् सारूप्यम् आवोढुं न प्रभवति॥

अथ श्रेण्यसंस्कृतसाहित्ये प्रयुज्यमानानि छन्दांसि प्रायेण छान्दसच्छन्दांसि आश्रितानि सन्त्यपि तेभ्यो भिद्यन्ते। 'श्लोकस्तत्र' प्रमुखायते। श्रेण्यसंस्कृतच्छन्दांसि बहुविधानि, प्रतिपादं वर्णमात्रा-संख्या-परिमाणयोः दृढनियमात् स्वोपजीव्येभ्यः छान्दसच्छन्दोभ्यो दुष्करतराणि च खलु भवन्ति॥

(ख) अध्यात्मम्। वेदेषु जातप्ररोहमात्रं पुनर्जन्मसिद्धान्तबीजम् उपनिषत्सु काण्डं दर्शयन् संस्कृतसाहित्ये तरुत्वेन परिणमति। तथाहि 'धर्मसंस्थापनार्थाय विनाशाय च दुष्कृताम्' देवो विष्णुः पुनः पुनः मनुष्यरूपेण वा पशुरूपेण वा पृथिवीम् अवतरति॥

'साधारणे तावन्मर्त्यलोकवर्णने पौनःपुन्येन अमर्त्यलोकवर्णनं संस्कृते क्रियते। घनिष्ठः च खलु देवलोक-भूलोकयोः अन्योन्यसम्बन्धः संस्कृतसाहित्ये पठ्यते' इत्येष अपरः वैदिकलौकिक-संस्कृतसाहित्ययोः विशेषः।

अथ महती काचित् संस्कृत-साहित्य-शिल्पिनाम् अत्युदात्तात्युक्तिरस-

१—ऋतुसंहार-गीतगोविन्द प्रभृतीनि काव्यानि पाश्चात्यैः गीतिकाव्यानीति व्यपदिश्यन्ते॥

प्रवणता विलोक्यते। एतावत्प्रबला चैषा यत् लोके किल आभाणकात् संस्कृतात्युक्तिः प्रविष्टा। तथाहि वाणस्य कादम्बर्यां 'त्रिभुवनललामभूता,' 'अपरेव पृथिवी समुत्पादिता,' 'सततप्रवृत्ताध्ययनध्वनिधौतकल्मषा'[1] इत्यादि-बहुविधा अतिशयोक्तयः उज्जयिनीवर्णने श्रूयन्ते।

"लोकातिशायितपस्वितावर्णनं, पौराणिकोपाख्यानानाम् अद्भुतः पटूल्लेखः, वर्णने भूयोभूयः बहुपद्यप्रयोगः, महाकाव्यानां महाकायत्वं, गद्य-रूपाणाम् एकतमस्य निरुपमः संक्षेपः, प्रत्यक्कालिके साहित्ये स्वभावादिव प्रयुक्ता दीर्घसमासाः इत्येतत् सर्वं श्रेण्यसंस्कृतसाहित्यकाराणां तामेतां प्रवृत्तिं पटु प्रदर्शयति॥"[2]

(ग) अधिविषयम्। वैदिकं साहित्यं हि तावद् आचूलमूलं धर्म्य-प्रवृत्तिकम्; श्रेण्यसंस्कृतसाहित्यं तु निसर्गतः लौकिकप्रवृत्तिपरिगृहीतम्। तथाहि वाय्वग्निवरुणादयः पुराण्यः वैदिक्यो देवताः श्रेण्यसंस्कृतयुगे गौण्यो जाताः। अथ ब्रह्मा विष्णुः शिवश्चेति त्रयो देवाः विशिष्य उपासनीयाः अभवन्। गणेश-कुवेर-लक्ष्मी-सरस्वती-प्रमुखानि नव्यानि नानादेवतान्तराणि च युगेऽत्र कविकल्पनातः प्रसूतानि।

(घ) अधिशैलि। पाणिनीय-व्याकरणसन्दानितचरणं श्रेण्यसंस्कृतं पंगुवत् सन्निरुद्धप्रसरं किल वर्तते। अन्यच्च एतद्युगीयालङ्कारिकाचार्यैः दूरत्ताः काव्यनियामकाः राद्धान्ताः प्रतिपादिताः, रचनासु च अस्य युगस्य दीर्घसमासप्रयोगः प्रचुरप्रचुरः प्राप्यते। तदित्थं यथा यथा कालोऽतिक्रामति तथा तथा संस्कृतकाव्यं क्लिष्टतां दधाति। न पुनः एतावता 'संस्कृतकाव्यं काव्यत्वाधायकगुणैः तर्हि परिहीयते' इति उन्नेतव्यम्। तदेतत् तथ्यम् 'अस्ति तावद् मत्संस्तुतेषु अन्यतमः मनीषिमतल्लिका कृतकाव्यात्मसाक्षात्कारः यं खलु इह काव्याद् ऋते न किञ्चिद् भावान्तरम् आनन्दयति' इति ब्रुवता मैकडानल महाशयेन अपि प्रतिपन्नम्। अविकृतस्तु परं संस्कृतकाव्यचमत्कारः केवलं मूलरचनाध्ययनेन एव अनुभवितुमर्हः। या हि रमणीयता संस्कृतच्छ-न्दस्सु वर्तते न सा भाषान्तरानुवादेषु अनुविधातुं शक्या।

---

१—एवमेव उज्जयिनीवर्णनं नैकपृष्ठानि व्याप्नोति। दशकुमारचरिते च दण्डि-कृतौ एतादृशमेव पुष्पापुरीवर्णनमुपलभ्यते॥

२—परामृशन्तु मैकडानलकृतं संस्कृत साहित्येतिवृत्तम् ( History of Sanskrit Literature )॥

तस्माद् अनुवादान् सर्वथा उपेक्ष्य संस्कृत-काव्यानन्देप्सूनां न केवलं मूलसंस्कृतग्रन्थाध्ययनम् एव अपेक्षितं भवति प्रत्युत भारतीयप्रकृतिदृश्यभाव परिज्ञानं, भारतीयानां शीलस्वभावविचारादिषु रूढिप्रथासम्प्रदायजनश्रुत्यादिषु च परिनिष्ठितत्वम् अपि ॥

श्रेण्यसंस्कृतवाङ्मयस्य इतिहासं संक्षेपेण वक्तुम् अस्माकं खल्वेष प्रयत्नः ॥

# अथ द्वितीयोऽध्यायः

## ऐतिहासिक महाकाव्यद्वयी पुराणानि च, तत्र

## सप्तमः खण्डः

### कविताऽऽपगायाः प्रभवः

"उदात्तं जटिलं च किमपि चरितं कवितायाः विषयः स्यात्। प्रधान-पात्राणि च अस्याः कुलीनानि उदाराणि विशालश्रीशालीनि च भवेयुः। विषयविस्तरश्च विषयप्रकर्षानुरूपतमः स्यात्। सम्वादैः स्वगतभाषणैः वृत्तान्त-कथाभिश्च खलु काव्यस्य विकासपरिपोषौ निर्वर्त्येते।" इत्येतद् "आर्नोल्ड"-वचनं रामायणमहाभारते प्रति तावद् अक्षरशश्चरितार्थं भवति। तथाहि रामायणे रामरावणयोः महाहवे रामस्य विजयः उपवर्णितः, महाभारते च महाभारतेतिनाम्ना लोके ख्यातिम् आरूढस्य पाण्डवधार्तराष्ट्राणां सङ्ग्रामस्य कथाऽतिविस्तरेण कीर्तिता। पात्राणि चात्र राजकुलप्रसूतत्वात् महाकुलानि विचित्रचातुर्येण च चित्रितानि, विशेषतः स्त्रीपात्रेषु प्रत्येकं प्रविविक्त-स्वरूपतया प्रतिभासमानं निर्वर्ण्यते[1]॥

न च रामायणमहाभारतयोः उद्भवः एकपदे बभूव। भारते हि वर्षे काव्यस्य मूलम् ऋग्वेदस्य सम्वादसूक्तेषु खलु विद्यमानं विन्दामहे। वैदिकयुगस्य अवरभागे आविर्भूतेषु ब्राह्मणग्रन्थेषु तावद् इतिहास-पुराणाऽऽख्याने ति त्रयाणां विद्यास्थानानाम् उल्लेख[2] उपलभ्यते। श्रौत-गृह्य-क्रियावसरेषु च क्रतोः अङ्गत्वेन तदमीषां श्रवणं श्रावणं चावश्यम् समभवद् इत्यत्र

---

१—तथाहि अस्ति महाभारते द्रौपदी या खलु कुलवधूः, मानिनी, दारुणतमेऽपि विपत्काले अनाकुला, सती दृढभर्तृव्रता च भवन्त्यपि मानुषस्वभावलभ्यैर्दोषैः सर्वथा विवर्जिता न भवति॥

२—अवरवैदिकयुगग्रन्थेषु हि इतिहासपुराणाध्ययनेन देवाः प्रीयन्ते इत्येवंविधाऽभिप्रायकानि वचनानि लभ्यन्ते। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' 'भारतं पञ्चमो वेदः' इत्यादिभिः प्रायोवादैः इतिहासपुराणानां महत्त्वं व्यक्तमेव॥

वै बहूनि आप्तप्रमाणानि सन्ति। एवंविधकाव्यानां ग्रन्थरूपतया तदा सद्भावे प्रमाणेषु दुर्लभेष्वपि पुरातने काले तत्पाठकानाम् ऐतिहासिकपौराणिकानां सद्भावस्तावत् प्रतिपेद्धुम् अशक्यः। काव्यप्रणेतृभिः ( अथ बौद्धै र्जैनैश्चापि ) विपुलं कथावस्तुजातं बुद्धावतरात् प्रागेव समाहृतान् पुराणेतिहासगाथाख्यायिकात्मकात् कथासाहित्यकोपाद् उपादीयतेत्यत्र न काचिदपि विचिकित्सा। महाभारतोल्लिखिताद् 'बृहदितिहास'—शब्दात् 'कतु: काव्यप्रकारकं प्राचीनतरं किमपि साहित्यमेव विवक्षितम्' इति वै तावदनुमीयते। पुरातन्यो विपुलाः काव्यकल्पाः 'पुराणवार्ताः' एवनूनम् अस्मत्काव्यवाङ्मयस्य उपजीव्यानां केषांचित् काव्यानां पशुपतत्रिकथानां च उपजीव्याः अभूवन् इत्येतस्य पक्षस्य साधीयस्त्वं तैः पद्यैः अपि सम्भाव्यते यानि ग्रन्थान्तरेषु तु लभ्यन्ते, परं विद्यमानकाव्यसन्दर्भेषु कदाचिदेव न तु सर्वदा लभ्यन्ते; यानि च स्वरूपेण रामायणमहाभारतस्थपद्यसादृश्यम् आवहन्ति। अपिच, साम्प्रतम् लोके प्रतीतं महाभारतं मौलिकं नास्तीति स्वयं महाभारताद् एव अवगम्यते। तथा चोक्तम्—

"आचख्युः कवयः केचित्
सम्प्रत्याचक्षतेऽपरे।
आख्यास्यन्ति तथैवान्ये
इतिहासमिमं भुवि॥"

अत्र 'आचख्युः' इति परोक्षलिट्प्रयोगोऽपि प्रेक्षणीयो भवति॥

# अथ अष्टमः खण्डः

## रामायणम्

(क) साधारणपरिचयः। भारतीयैः ग्रन्थकारैः रामायणं तावद् आद्यं काव्यम्[1], अस्य प्रणेता ऋषिर्वाल्मीकिश्च आद्यः कविः आख्यायते। तदस्मिन् रामायणे न केवलं संग्रामाः विजयाश्चैव उपनिबद्धाः, प्रत्युत रूपकोपमाद्यलङ्कारसमुद्भासितायां भाषायां प्रकृतिरपि उपवर्णिता। तदेवमत्र जनमनोरञ्जनमहाकाव्याऽलंकृतकाव्योभयकृत्योः लक्षणे उपपद्येते। निखि-

१—काव्यलक्षणे हि काव्यस्य अन्तरात्मनोऽपेक्षया अस्य शरीरस्यैव अधिकतरं निरूपणं निशाम्यते, तस्मादेव काव्ये उपमा-रूपक-श्लेषप्रभृत्यलङ्काराणां भूरि संयोजनं भवति॥

लेऽपि च महीमण्डले किमपि काव्यान्तरं लोकंपृणतया रामायणं नातिशेते। स्वनिर्माणकालाद् आरभ्यैव खल्वेतद् भारते काव्य-रूपक-प्रणेतृणां हृदयाह्लादम् आदधद् वर्तते। महाभारते तृतीयपर्वणि रामोपाख्यानं कीर्त्यते। अग्नि-विष्णु-गरुड़-भागवत-ब्रह्माण्डादिषु पुराणेषु च रामायणम् अनुसृत्य रामस्य वीर्यकर्माणि शंसितानि। भास[1] कालिदासादयः[2] काव्यधनाः कवयो रूपकप्रणेतारश्च रामायणस्य आधमर्ण्यम् उपयन्ति। अश्वघोषप्रमुखैः बौद्ध-कविभिः अपि स्वकाव्यपादपनिषेकः प्रायेण रामायण ह्रदादेव निर्वर्तितः। खीष्टप्रथमशताब्द्यां लब्धजन्मना जैनमुनिविमलसूरिणा[3] रामायणोपजीव्यकः ग्रन्थः खल्वेकः प्राणायि। खीष्टीयतृतीयशताब्द्यां त्रिविष्टप-चीन-भारत्योः अनूदितेषु बौद्धग्रन्थेष्वपि रामस्य वीर्याणि वर्णितानि। अथ न केवलं भारते वर्षे, तस्माद् बहिः सुवर्णभूम्यन्तर्गतेषु ब्रह्मदेश-भारतीयचीन-प्राच्यद्वीपादि-खण्डेष्वपि हि एतत् लोकप्रियम् आसांचक्रे। तथाहि यवद्वीपे ( Java ) लाराजांग्राङ्-प्रमवनन-पनतरन नामकस्थानस्थितेषु शिवमन्दिरेषु देवगढस्थे विष्णुमन्दिरे च शिलासु रामायणस्य शतद्वयसंख्यकाभ्यधिका वृत्तान्ताः समुत्कीर्णाः समुपलभ्यन्ते। यवद्वीपीयसाहित्ये मलायाऽभिधप्रायद्वीपीय-साहित्ये च कतिपयेषु ग्रन्थेषु रामस्य वीर्यचरितम् उदीर्यते। सुवर्णभूमेः स्याम-बाली-प्रमुखानां देशानां ललितकलारचनासु रामायणीयमुख्यपात्राणि मुक्तावलीषु तरलाः इव नायकायमानानि निरूप्यन्ते॥

रामायणस्य आधुनिकभारतीयभाषासम्बन्धप्रकरणे तामिलभाषयाऽस्य सम्बन्धः वर्षिष्ठः इति तावद् एकादशखीष्टशतके जातेन रामायणस्य तामिला-नुवादेन स्पष्टः एव। तुलसीदासरचितं[4] रामायणम् ( रामचरितमानस[5] ) उत्तरापथे यादृश लोकंपृणं कोटि-कोटिभारतीय-महाजन-धर्म-नीति-मति-समाधायकं चेति न खलु कस्यचिदपि कोविदस्य तिरोहितम्। भारतस्य अन्यासु भाषासु अपि च रामायणस्य नानाविधानि ईषत्परिवर्तितानि अपरिवर्तितानि अनुकृतानि वा रूपान्तराणि आसाद्यन्ते। रामनवमी[6]-विजय-

१—वीक्ष्यतां भासकृतं प्रतिमानाटकम् अभिषेकनाटकं च॥

२—विलोक्यतां कालिदासकृतं रघुवंशम्॥

३—निभाल्यतां तत्कृतं पउमचरियं ( पद्मचरितं ) नाम प्राकृतकाव्यम्॥

४—खै ष्टसप्तदशशतकोद्भवाः किल तुलसीदासगोस्वामिनः॥

५—वाल्मीकीयरामायणोपजीवि हिन्दीकाव्यम्॥

६—चैत्रसितपाक्षिकी नवमी रामजन्मतिथिः॥

दशमी[1]-दीपावलीत्यादयोऽने[2] के उत्सवाश्च रामचरितानुबद्धाः प्रतिवर्षं भारते कोटिभिर्जनानां महता समारम्भेण मान्यन्ते ॥

रामायणे आदिमे काण्डे तावत् पठ्यते यद् 'भगवान् ब्रह्मा महर्षिं वाल्मीकिम् अभ्युपेत्य तं रामस्य वीर्याणि गातुम् आदिशत्—

'यावत् स्थास्यन्ति गिरयः सरितश्च महीतले
तावद् रामायणकथा लोकेषु प्रचरिष्यति'

इत्यनया आशिषा तं संयोजयामास' इति ॥

## (ख) रामायणिकं महत्त्वम् ।

न केवलं लोकप्रियतया सालङ्कारकाव्यतया च, अपितु हिन्दूनाम् आचारिक (आचारविद्या, Ethics)-ग्रन्थतयाऽपि रामायणं महिम्ना शालते। रामायणलभ्यानां शिक्षाणां व्यवहार्यतया तासां सुबोधत्वं तावत् स्पष्टमेव। अपि च रामायणं नाम मानवजीवनस्य दुरधिगमोपनिषदः काऽपि कुञ्जिका खलु। अत्र हि आदर्शभ्रातृ-पति-पत्नी-सेवक-सूनु-नृपाणां[3] स्वरूपं तत्तदाचारेण यथा व्याख्यातं न तथा क्वाप्यन्यत्र। दशरथस्य सत्यसन्धत्वं सुतवत्सलत्वं तस्यैव सत्यसन्धत्वं सुतवत्सलत्वमिव[4], कौसल्यायाः कर्तव्यधीः निरुपमैव, सुमित्रायाः स्वसुखत्यागवृत्तिः अदृष्टचरी[5], लक्ष्मणस्य च अग्रज-भ्रातृजायाभक्तिः अभूतपूर्वा[6]। यत्सत्यं 'मर्यादापुरुषोत्तमः' इति रामबिरुदः तावल्लोके न मृषा प्रथितः। किं बहुना, रामायणे खलु सदाचारस्य चेतनानि निदर्शनानि दृश्यन्ते। एवंविधगुणशालितया एव रामायणम् अन्तर्भारते तद्बहिश्च परःकोटि-जन-प्राणोच्छ्वासः अजनि जायते जनिष्यते च ॥

१—आश्विनशुक्लपाक्षिकी दशमी रामकृतस्य लङ्काजयस्य तिथिः ॥

२—कार्तिकी अमावस्या लङ्काजयानन्तरं रामस्य अयोध्याप्रत्यागमस्य तिथिः ॥

३—आदर्शभ्रातरौ, यथा भरतलक्ष्मणौ; आदर्शपतिः, यथा रामः; आदर्शपत्नी, यथा सीता; आदर्शसेवकः, यथा हनूमान्; आदर्शसूनुः, यथा रामः; आदर्शनृपः, यथा रामः। भारते हि रामराज्येतिशब्देन स एवार्थोऽभिधीयते यः आदर्शराज्येत्यनेन ॥

४—वचोनाशात् प्राणनाशः सुवरतरः इति किल सत्त्वक्षत्रियाः मेनिरे ॥

५—सुमित्रा हि वनं प्रव्रजन्तं रामम् अनु स्वतनयं लक्ष्मणं प्रेषयन्ती विषादलवम् अपि न अवाप ॥

६—लक्ष्मणो हि नित्यं पादाभिवन्दनात् सीतायाः पादभूषणं केवलम् अभिज्ञातवान्, न तु मुखभूषणं; सीतामुखस्य तेन कदापि अदर्शनात् ॥

अथ भारतस्य चिरन्तनसभ्यतायाः विशेषप्रतिपत्तौ अपि रामायणस्य परमोपयोगित्वाद् ऐतिहासिकविज्ञानविशेषबुभुत्सूनाम् अपि तदध्ययनं गुरु-वद् भवति एतच्च भारतीयं पुराणं लौकिकं राजकीयं च वृत्तं तदानीन्तनीं भौगोलिकवस्तुस्थितिं च निपुणं निदर्शयति ॥

(ग) रामायणस्य शाखाग्रन्थाः ।

रामायणस्य नाना शाखाग्रन्थाः समासाद्यन्ते । तथाहि—

(१) मोम्बापुरी-शाखाग्रन्थः (मोम्बापुर्यां मुद्रितः)। अत्र शाखाग्रन्थे 'राम'-कृता तिलकाख्या टीका एतदीया सर्वाष्टीकाः अतिशेते। शिरोमणिर्नाम भूषणं नाम च टीकाद्वयम् अपरम् अस्यां शाखायां प्रसिद्धम् ।

(२) वङ्ग-शाखाग्रन्थः (कलिकातायां मुद्रितः)। अत्र लोकनाथकृता संस्कृतटीका अवाप्यते। इमं हि खलु 'जि० गारेशियो' (G. Gorresio) नामा वैदेशिकः कश्चित् पण्डितः अनूवाद। स चैष अनुवादः पञ्च प्रथीयस्सु खण्डेषु प्रकाशं गतोऽस्ति ॥

(३) वायव्यशाखाग्रन्थः (काश्मीरिकशाखाग्रन्थः इतिनाम्ना च प्रसिद्धः)। अयं लवपुरे सम्मुद्रितोऽस्ति, टीकाकारश्चास्य कटकः ॥

(४) दक्षिणापथ शाखाग्रन्थः (मदरासे मुद्रितः)। अयं हि खलु मोम्बापुरीग्रन्थतो नात्यन्तं भिद्यते। इतरा च शाखात्रयी मिथो बहुतरं भिद्यते ॥

अथैतेषां कतमो वाल्मीकेः मूलग्रन्थेन भूयिष्ठं सम्बध्यते इति तावद् दुर्वचम् । श्लेजल (Schlegel) मतेन[1] वंगीया शाखा मूलाद् अनन्तरीया, बॉटलिङ् (Bohtlingk)—मतेन तु भूयिष्ठाः पुराणपदप्रयोगाः मोम्बापुरी-शाखायाम्[2] एव दरीदृश्यन्ते। ऐतिह्यप्रमाणेन च न खल्वत्र यथेष्टं किमपि पर्यवसीयते। हरिवंशपुराणे षट्त्रिंशदुत्तरद्विशततमाध्याये कीर्त्यमानो रामा-यणकथांशो वङ्गीयशाखाकथां विशेषतोऽनुसरन् इव लक्ष्यते। अष्टमनवम-शतकयोः साहित्य-प्रबन्धेषु उदाहृतास्तु रामायणांशा मोम्बापुरीशाखाकथाम्

१—दृश्यतां सटिप्पणं सटीकं १८२९ तमाब्दात् १८३८ तमाब्दं यावत् खण्डत्रये तत्प्रकाशितं वाल्मीकिरामायणम् ॥

२—वङ्गीयवायव्ये च शाखे यथाक्रमं पाञ्चालीगौडीशैल्योः प्रधानक्षेत्रयोः श्रेण्यसंस्कृतस्य मुख्याभिजनयोः भूभागयोः लब्धजनी, अपसारितार्षप्रयोगे च ॥

इदम् अन्वीयमानाः तावत् प्रतीयन्ते। एकादशशतकभवक्षेमेन्द्रकथामञ्जरीतः ज्ञायते यत् तत्प्राक्काललब्धप्रकाशा खलु वायव्यदिगुदिता शाखा इति। एकादशशतीप्रसूतभोजराजप्रणीततायाः रामायणचम्प्वाः उपजीव्या योध्यापुरी-शाखा इत्यादि निर्विकल्पं शक्यं तावद् वक्तुम्। अद्यप्रभृति बहुतिथात् कालात् प्रागेव कदाचित् सर्वाः इमाः पूर्वोक्ताः शाखाः सम्पूर्णवपुष्कक्रियाः सम्बभूवुः इति निर्धार्यते। तदाऽऽरभ्य अन्योन्यस्य तत्र तत्र स्थलेषु यथा-सम्भवम् उपचयापचयं रचयन्तः एते शाखाग्रन्थाः इतरेतरनिरपेक्षाः वै प्रवर्तन्ते॥

## (घ) कथाऽनुक्रमणी।

अथ काण्डाख्येषु सप्तसु भागेषु विभक्ते रामायणग्रन्थे उपचतुर्विंशति-सहस्राणि श्लोकानां लोक्यन्ते। तत्र च बालकाण्डाख्ये प्रथमे काण्डे रामस्य यौवनमुखं, विश्वामित्रेण मुनिवरेण सह तदाश्रमपदं प्रति प्रस्थानं, तत्र याग-विघातिनां राक्षसानां हननं जनकजापाणिपीडनं च इति; अयोध्याकाण्डाभिधे द्वितीये काण्डे रामस्य यौवराज्यपदाभिषेकसमारोहोपक्रमः, तत्र कैकेयीकृतः प्रत्यूहः, रामस्यनिर्वासनम्, रामविरहे दशरथस्य स्वर्यानम्, रामं राजधानीं प्रति प्रत्यानिनीषो भरतस्य वन्ध्यं विन्ध्ये रामोपस्थानं च इति; अरण्यकाण्ड-नाम्नि तृतीये काण्डे रामस्य दण्डका—गहनाऽवगाहनं विराधाऽऽदि-दनुज-दलनं पञ्चवट्यध्युषणं शूर्पणखया सार्द्धं कलहायनं सचतुर्दशसहस्ररात्रि-चरनिकरस्य खरस्य उज्जासनं च रावणकृतं मैथिलीहरणं रामकृतं करुणकरुणं परिदेवनं च इति; किष्किन्धाकाण्डनामके चतुर्थे काण्डे रामस्य सुग्रीवेण सौहार्दं वालिनो निषूदनं च वानरवरूथिनीभिः अनुगम्यमानस्य पवनसुतस्य अवनिसुतायाः अनुसन्धानं च इतिः सुन्दरकाण्डाभिधाने पञ्चमे काण्डे ललाम-लङ्का-द्वीपस्य मनोज्ञत्वं रावणप्रासादस्य वलवच्चेतःप्रसादकत्वं हनूमतः सीतायाः सान्त्वप्रदायकत्वं सह सुसमाचारेण पम्पापुर्याः पथिकत्व च इति; युद्धकाण्डनाम्नि षष्ठे प्रथिष्ठे काण्डे रामस्य रावणमारणं लङ्काजयश्च इति; उत्तरकाण्डेतिसंज्ञिते सप्तमे काण्डे पौरजानपदेषु लब्धप्रसरः सीतागोचरः चरैः रामश्रुतिगोचरी कृतः अपवादः, रामराजादिष्टं सीताप्रव्राजनं, सीताशोकः, वाल्मीकेः आश्रमपदे कुशलवयो जननं परिसमाप्तिश्चेति विस्तरेण वर्ण्यते॥

## (ङ) रामायणोपाख्यानानि।

अथ रामायणे, विशिष्य प्रथमे सप्तमे च काण्डे, बहूनि मधुरमधुराणि उपाख्यानानि खलु आख्यायन्ते। तत्र च विष्णोः वामनावतरः (१,२९), -

कार्त्तिकेयोत्पत्तिः (१, ३५—७), स्वर्गाद् गङ्गावरोहणं (१, ३८—४४), अर्णवमथनं (१,४५), श्लोकाविर्भावः[1] (१,२) च इत्येतावन्ति तावत् प्रथमे काण्डे, ययाति- नहुषकथा (७, ५८), इन्द्रेण वृत्रवधः (७,८४—७), उर्वशी-पुरुरवःकथा (७,८७—९०) शम्बूकस्य वृषलतापसस्य कथा चेत्येतानि च सप्तमे काण्डे प्राप्तसरपदम् अर्हन्ति ॥

## (च) रामायणस्य प्रविविक्तता ( Genuineness )

वाल्मीकिप्रणीता रामायणकथा षष्ठे काण्डे खलु उपसंहृता भवति इति बहुभिः लिंगैः तावत् स्पष्टम् अनुमीयते । सप्तमं हि काण्डं मुख्यकथाऽनन्वितोपाख्यानबहुलम् । तथाहि एतन्मुखभागे राक्षसोत्पत्तिः, इन्द्ररावणयोः रणं हनूमतस्तारुण्यं चेत्यादीनि बहूनि मुख्यकथाधारासङ्गलानि उपाख्यानानि आख्यायन्ते । प्रथमेऽपि च काण्डे भूयान् प्रक्षिप्तांशः प्रेक्ष्यते । यद्यपि अन्यत्र एतद् अनुमानं पुनः पुष्णाति तदिह अधः मुष्टिग्राह्यत्वेन उपन्यस्यते—

(१) एतयोः काण्डयोः शैलीभाषे इतरकाण्डशैलीभाषाभ्याम् अपकृष्येते ॥

(२) व्याघातदोषदुष्टौ खलु एतौ काण्डौ । यतः प्रथमकाण्डस्थवक्ष्यमाण कथाविवरणानि द्वितीयादिकाण्डस्थकथावर्णनैः विरुध्यन्ते । भवति च उदाहरणम् अत्र लक्ष्मणविवाहकथा ॥

(३) द्वितीयादिषष्ठान्तेषु पञ्चसु काण्डेषु तत्प्रक्षिप्तांशकथावर्जं सर्वत्र वर्ण्यमानः रामः आदर्शमर्त्यवीरः, प्रथमसप्तमयोस्तु स पृथिवीम् अवतीर्णः साक्षाद् नूनं विष्णुः एव भाति ॥

(४) प्रथमकाण्डे प्रथमतृतीययोः सर्गयोः द्वे कथानुक्रमण्यौ यत्र एकत्र हि प्रथमसप्तमकाण्डोल्लेखो न विद्यते ॥

---

१—एकदा वने विहरन् महर्षिः वाल्मीकिः स्वैरं रममाणं क्रौञ्चमिथुनम् एकम् अद्राक्षीत् । ततः कश्चिद् व्याधः तत्क्रौञ्चदम्पत्योः पतिम् अवधीत् । एतद् दृष्ट्वा करुणापरवशो मुनिः स्वयमेव श्लोकच्छन्दस्त्वमुपेतया वाचा तं व्याधम् अभिशस्तवान् । अथ भगवान् भूतभावनः वाल्मीकिमुपेत्य श्लोकच्छन्दसा रामचरितं गातुमादिदेश । एतद्दन्तकथाबलेन 'महाकाव्यप्रयुक्तश्लोकच्छन्दसः प्रौढिः वाल्मीकिनिर्वर्तिता' इति जैकोबिः तर्कयति ॥

एभिः खलु लिंगैः जैकोबि ( Jacobi ) शास्त्रिणा[1] पर्यवसितं यत् द्वितीयादिषष्ठान्तकाण्डकथैव मुख्यरामायणकथा, आद्यान्त्यकाण्डकथया सह काश्चिद् मुख्यकथान्तर्गताः कथास्तु प्रक्षिप्ताः एव। केचिद् द्वितीयकाण्ड-प्रारम्भसर्गाः च प्रथमकाण्डे अनुस्यूताः। मुख्यरामायणकथा प्रथमकाण्डे पञ्चमसर्गात् प्रारभ्यते इति॥

## (छ) रामायणस्य निर्माणकालः।

(१) महाभारतेन सम्बन्धः। प्रक्षिप्तांशवर्जं रामायणीयः मौलिको भागः महाभारतीयमौलिकभागात् प्राचीनतरः। यतो हि महाभारतीयपुरुष-प्रवरेषु एकतमस्य अपि वर्णनं रामायणे नोपलभ्यते, महाभारते तु क्वचित् क्वचिद् अवबर्ण्यमाना रामकथा श्रूयते। अपि च महाभारते सप्तमपर्वणि रामायणषष्ठकाण्डस्थपद्यद्वयी उदाहृता दृश्यते। महाभारते तृतीयपर्वणि (२७७—२९१ तमेषु अध्यायेषु) यद् रामोपाख्यानम् आख्यायते तद् रामायणमूलकम् एव प्रतिभाति। वस्तुतस्तु महाभारतस्य पाठकाः रामायण-कथाभिज्ञाः इति मनसि निधायैव रचयित्रा महाभारतगतरामोपाख्यानं रचितम् इति अवगम्यते॥

(२) बौद्धसाहित्येन सम्बन्धः। अत्र तावद् वक्ष्यमाणानि तत्त्वानि ध्यानम् अर्हन्ति—

(क) ( रामकथाभूतं ) दशरथजातकं यत्किञ्चित् परिवृत्तिं आनीय पालिभाषाजातकेषु वर्ण्यते[2]।

अपरं च जातकेऽत्र पालिभाषायां रूपान्तरितं रामायणीयं (७, १२८) पद्यम् अपि एकम् उदाह्रियते॥

---

१—तथा चोक्तं तेन यत् "यथा उत्तरोत्तरभाविन्या सन्तत्या अस्माकं पूजास्थानेषु पुराणमन्दिरेषु स स नवनवः संयोगः स स च जीर्णोद्धारः कृतः चिरत्नरचनायाश्च न कोऽप्यंशः ध्वंसं नीतः, एवमेव बह्वीभिः गायकसन्ततिभिः रामायणस्य परिकर्म सम्पादितम्; परं यम् अभितः तथाविधः महान् पदार्थसङ्घातः आवृणोति स आद्यः स्थिरांशः यदि सर्वात्मना दुरधिगमः भवति तर्हि भवतु-नाम, तस्य प्रधानभागः तु तत्त्वं अनुसन्दधता केन विदुषा दुर्वेदः स्यात्।" इति॥

२—इमानि जातकानि वाङ्मयस्य अङ्गविशेषः इति सम्मन्तुम् उचितम्। बौद्धत्व-लक्षणलक्षितेषु तेषु खलु आबुद्धत्वप्राप्तेः सुगतस्य जन्मपरम्पराणां नानाजीवन-कथाः वर्णिताः॥

(२) मृगयाविहारे या तापससूनोः कुमारस्य वधकथा रामायणे (२, ६३) दशरथेन श्राव्यते तस्याः एव पुराणतरम् इव रूपं साम-जातके[1] अधीयते ॥

(३) एवं जातकान्तरेष्वपि[2] खलु काचन् कश्चिद् रामायणस्थलसाम्यं दधानानि स्थलानि दृक्पथम् अवतरन्ति ॥

(४) एतद्विषयविशेषज्ञः उपाध्यायः सिल्वेन लेविः अवधारयति यत् सद्धर्म-स्मृत्युपस्थानस्य[3] ( बौद्धग्रन्थविशेषस्य ) मूलम् अवश्यं वाल्मीकि-रामायणम् । तत्र स्थितं हि जम्बूद्वीपवर्णनं सर्वथा खलु रामायण-स्थितस्य दिग्वर्णनस्य सदृशमस्ति। अपि च सरित्-सरित्पति-पर्वत-जनपद-द्वीप-प्रभृतीनि ग्रन्थेऽत्र सर्वात्मना यथा रामायणे तथा वर्ण्यन्ते[4] इति ॥

(५) भाषाविज्ञानबलेन च बौद्धकालपूर्वभवं खलु रामायणम् इति वै जैकोबिना निर्धारितम्[5] ॥

(६) बौद्धधर्मस्य परिचयः कश्चिद् रामायणे प्राप्यते उत नैव इति पृच्छाम् उत्थाप्य "प्रश्नम् तावद् इमं प्रतिब्रुवाणाः 'न' इत्येव विश्रब्धं ब्रूमः, यतः केवलं यत्र एकस्मिन् एव स्थले रामायणे बुद्धस्य नाम श्रूयते प्रक्षिप्तम् एव नूनं तत्' इति विण्टरनिट्ज़महोदयः व्याचष्टे ॥

(ग) यूनानदेशवास्तव्यैः सम्बन्धः ॥ समग्रे खलु रामायणे यूनान-देशवास्तव्यानां 'यवनानां' नामग्राहि केवलं पद्यद्वयमस्ति । एतद्बलेन 'यवन-

---

१—सामजातकं तिपिटकान्तर्गतम् ॥

२—परामृश्यतां 'विण्टरनिट्ज़' प्रणीतं 'ए हिस्टरी आव इण्डियन लिटरेचर' प्रथमभागे ५०६ तमं पृष्ठम् ॥

३—अप्राप्यः खलु ग्रन्थोऽयम् । अस्य दीर्घैकदेशस्तु सन्तिदेवप्रणीते शिक्षासमुच्चये समुच्चितो लभ्यते ॥

४—'ननु वाल्मीकिरेव अत्र बौद्धस्मृतिग्रन्थस्य अधमर्णतां कुतो न गच्छति' इति चेत्, 'न; बौद्धान् प्रति ब्राह्मणेषु तादृशोदारभावस्य अदर्शनात्, वाल्मीकीये रामायणे आचारस्य यादृशः परमोज्ज्वलः आदर्शो दृश्यते बौद्ध-ग्रन्थेषु तादृशस्य अनुपलम्भाच्च । बौद्धलेखकानां ब्राह्मणलेखकाधमर्णत्वं तु नानाग्रन्थप्रमाणैः सिद्धम् ॥

५—"यदि हि वाल्मीकिः बुद्धाधस्तनः अभविष्यत् तदा एवादृशं लोकप्रियं महामहाकाव्यं प्राकृतान्यतमभेदनिबद्धम् अभविष्यत् ॥"

सकाशाद् गृहीतं खलु रामायणकथाबीजम् इति वैबरमहाशयैः परिकल्प्यते किल। परं परिकल्पना एषा 'ख्रीष्टपूर्वतृतीयशतकाद् अर्वाक् कदाचित प्रक्षिप्तं खलु पद्यद्वयमेतद्' इति दृढवाचोयुक्त्या वदता पण्डितजैकोबिना एव प्रत्युक्ता ॥

(घ) अन्तरङ्गप्रमाणम्। (१) रामायणे तावत् कोसलराजधानी अयोध्येति आख्यायते। अथ बौद्धैः जैनैः यवनैः पतञ्जलिना चापि सा साकेतः इति स्मर्यते। सप्तमकाण्डे च लवस्य राजधानी श्रावस्ती वर्णिता यत्र इतिहासविश्रुतः कोसलराजः प्रसेनजित् बुद्धकाले मेदिनीं शशास। मुख्ये च रामायणे (प्रथमकाण्डादिषष्ठकाण्डान्ते) क्वचिदपि श्रावस्तीनामधेयस्य अश्रूयमाणतया अनुमीयते यत् 'अयोध्याऽभ्युदये अहीयमाने, साकेतेतिनामकरणात् प्राक्, श्रावस्त्याश्च अभ्युदयात् पूर्वं कस्मिंश्चित् काले प्रकृतस्य रामायणस्य निर्माणं बभूव इति ॥

(२) रामायणे (३५ तमे सर्गे) एतद्यशसा आक्रान्तानां प्राच्यभारतस्य कौशाम्बि-कान्यकुब्ज-काम्पिल्य-प्रमुखाणां प्रमुखनगराणां नामानि तावद् श्रूयन्ते। (आधुनिक पटनायाः) पाटलिपुत्राभिधायाः नगर्याः च यत्र स्थितिः तदपि पदं रामचरणानुगृहीतम् अभूत् इत्यपि च पठ्यते। परं निखिलेऽपि खलु राम यणे पाटलिपुत्रनामधेयं तु न क्वापि श्रूयते। नगरम् एतद् रामायण निर्माणकाले चेद् अवर्तिष्यत नामधेयम् अपि अस्य नूनं प्राच्यैः नगरान्तरैः सह परामृष्टम् अभविष्यत् ॥

(३) बालकाण्डे च पृथग् जगतीजानिद्वयेन भुज्यमाने मिथिलाविशालाभिधे द्वे नगर्यौ वर्ण्येते। पठ्यते च इतिहासे यद् उभे इमे बुद्धकालात् प्रागेव वैशालीतिप्रथितैकनगर्यभिख्यां[1] खलु भेजाते इति ॥

(४) अन्यच्च, बुद्धकालात् प्राग् भारतं यथा नानानरपतिपाल्यमानेषु अनेकलघुराज्येषु[2] प्रविभक्तम् आसीत् तथैव रामायणे वर्ण्यते ॥

तदित्थम् अन्तरङ्गप्रमाणात् 'ख्रीष्टपूर्वं पञ्चमशतकात् प्रागेव कस्मिंश्चित् काले रामायणस्य मूलप्रणेता बभूव' इति पर्यवसितं भवति ॥

---

१—ख्रीष्टपूर्वं ३८० तमसम्वत्सरं निकषा येन अधिष्ठिता द्वितीया बौद्धपरिषद् समजनि अमुना कालाशोकेन किल वैशाली नाम नगरी प्रथमं निर्मिता ॥

२—महाभारतयुगे तु विस्तृतराज्याधिपतयो जरासन्धादयो राजानो बभूवुः इति ज्ञा...

[ अथात्र केचिद् वदन्ति 'रामायणमहाभारतयोः प्रयोगाः पाणिनिना अलक्ष्यीकृतत्वात् तदर्वाक्कालभवं रामायणमिति रामायणभाषया, विशेषतः सोम्याकुराशाखारामायणभाषया, अनुमीयते' इति। अन्ये तु 'शिष्टजनस्यैव भाषा पाणिनिव्याकरणस्य विषयो भवति न तु साधारणजनस्यापि। अथ पाणिनि पर-काल-प्रादुर्भूतं चेद् रामायणम् अभविष्यत् पाणिनिव्याकरण-परवशा खलु अस्य भाषा अभविष्यत् इति न वै पाणिनेः अर्वाचीनं रामायणम्' इति अध्यवस्यन्ति ॥ ]

(ज) शैली। रामायणं तावद् आद्यं संस्कृतकाव्यं, तत्प्रणेता च आद्यः संस्कृतकविः इति यत् प्रागुक्तं तत् निरपवादसर्वसंस्कृतग्रन्थकारैः प्रमाणी क्रियते। एवं गते रामायणेन संस्कृतकाव्यस्य बाल्यरूपं निरूप्यते। अनुष्टुप्छन्दसा सहसा किल वाल्मीकिः वाचं व्याजहार इति आभाणकाद् 'वाल्मीकिः उपज्ञा नूनम् अनुष्टुप्छन्दसः' इति संसूच्यते। अथारभ्य इति-पर्यन्तं सर्वत्र रामायणी भाषा विशुद्धा परिष्कृता च क्वचित् क्वचिच्च अलङ्कार मण्डिताऽपि च। उपमारूपके चास्य परमरमणीये दर्शनीये च भवतः। अनयोः हि कवेः महत् कौशलम्। शब्दार्थयोः प्रसादगुणमयत्वं काव्यस्यास्य प्रणेतुः कोऽपि महान् अन्यकवि-व्यतिरेकी गुणो भवति ॥

# अथ नवमः खण्डः

## महाभारतम्।

(क) प्रास्ताविकम्। अद्यत्वे उपलभ्यमानं यन्महाभारतं तन्मौलिक-महाभारतस्य समुपबृंहितं रूपम्। मौलिकं हि महाभारतं स्वरूपतः ऐतिहासिकं खल्वासीत्, नतु औपदेशिकम्। एतत्प्रणेत्रा महर्षिणा व्यासेन अस्य 'जयः' इति नाम चक्रे इति प्रबलं सम्भाव्यते[१]। आद्ये च ग्रन्थे महता कथाविस्तरेण भवितव्यम् इत्यपि वर्ण्यमानकथाडम्बरेण उह्यते। अथ अष्टसहस्रश्लोक-

---

१—पठ्यते च अष्टादशे पर्वणि 'जयो नामेतिहासोऽयम्' इति। अपि च महाभारते प्रतिपर्वं—

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

इति मुखपद्यमधीयते।

नीलकण्ठस्तु स्वटीकायां 'जय'—स्थाने 'महाभारत'—इति प्रयुङ्क्ते ॥

परिमाणं महाभारतम् इति मैकडानलपण्डितैः यद् उन्नीतं तदपि न विचार-चारु चकास्ति[1] ॥

मन्वादि भारतं केचिदस्तिकादि तथापरे ।

तथा परिचराद्यन्ये विप्राः सम्यगधीयते ॥ इति-आदि-पर्वस्थपद्येन 'महाभारतस्य प्रौढिप्राप्तिः अवस्थात्रयपूर्विका' इति लभ्यते । यत्र व्यासः स्वरचितं ग्रन्थं आत्मनः शिष्यपञ्चकेषु अन्यतमं वैशम्पायन मध्यापयामास, सा तावत् प्रथमा अवस्था । एतदवस्थाकस्य प्रकृतस्य महाभारतस्य प्रारम्भः परिचरेतिशब्देन बभूव इति संभाव्यते । यत्र पुनः वैशम्पायनः स्वरचित-सम्वादैः संयोज्य वैयासिकं ग्रन्थं नागयज्ञे जनमेजयं श्रावयामास सा खलु द्वितीयावस्था इति उत्प्रेक्ष्यते । एतदवस्थाकं महाभारतं चतुर्विंशतिसहस्र-श्लोकानाम् आसीत् तदुपक्रमश्च अस्तिकोपाख्यानेन अभूद् इति खलु उह्यते । अथ एष द्वितीयावस्थायां समुपबृंहितः ग्रन्थः शौनकस्य द्वादशवार्षिके सत्रे तस्य सौतिना श्रावितः, अत्र शौनकेन पृष्टान् अनुयोगान् प्रतिब्रुवता सौतिना ग्रन्थोऽयं पुनः परिवृंहितः, तदेवं, साम्प्रतम् उपलभ्यमाना, लक्षपरिमाणा श्लोकसङ्ख्या तृतीयावस्थायामेव प्रायः पूर्तिम् अगात् । तथा चोच्यते—

अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् ।
एकं शतसहस्रं तु मयोक्तं वै निबोधत ॥ इति

तृतीयावस्थाकः ग्रन्थः मनुशब्देन प्रारभ्यते । अथास्य महाभारतम् इति नामधेयं सौतिकृतम् इत्यपि सम्भवति[2] ॥

प्रथमं हि महाभारतम् इतिहासः इति पुराणम् इति आख्यानम् इति च आख्यायतेस्म[3] । अद्यत्वे एष तावद् आचारिकयाः ( Ethics ) नीतिविद्यायाश्च महान् आकरः धर्मार्थकाममोक्षचतुर्वर्गस्य प्राप्तिसाधनं खलु

---

१—अष्ट सहस्राणि श्लोकानां महाभारते इति यत् परिमितिकरणं न तत् सर्व-श्लोकान् अभिप्रेत्य प्रत्युत कूटश्लोकानेव अभिप्रेत्य इति सम्भाव्यते ॥

२—सम्वाद्यतां—'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते' इति ॥ पाणिनीयेऽष्ट-तये व्याकरणे 'युधिष्ठिर' शब्दोऽधीयते नतु 'महाभारत'शब्दः, एतस्मादपि अर्वाक्कालिकं खलु महाभारतेतिनामधेयम्' इति गम्यते ॥

३—भारतीयानां मतेन पर्यायवाचिनः खल्वेते त्रयः शब्दाः ॥

महाभारतम् इति आशास्यते। 'भारतं पञ्चमो वेदः[१]' इति च भवति महान् प्रायोवादः। कैश्चित्तु महाभारतं 'कृष्ण'वेदतया[२] खलु आस्थीयते। आदितः यावदवसानं सर्वत्र अत्र वैष्णवराद्धान्तानां प्रमुखत्वाद् महाभारतं 'वैष्णव-स्मृतिः' इत्यपि संज्ञितं भवति। यत् सत्यम् अद्यत्वे लभ्यमाने महाभारते अनुशासनमयोंऽशः ऐतिहासिकांशस्य प्रायश्चतुर्गुणः खल्वस्ति॥

(ख) **महत्त्वम्**। लोकप्रसिद्धौ रामायणाद् हीयमानम् अपि महा-भारतं महिम्ना तस्मान्न हीयते। अस्य हि ऐतिहासिकांशे पाण्डवधार्तराष्ट्रा-णाम् इतिहासः मिथः संग्रामश्च विस्तरेण वर्णितः। इदं हि नः तदानीन्तन-भारतीय-समाज-राजनय-दशा-वृत्तान्तान् विवृणोति। अन्यच्च तदात्वे भारत-वर्षम् अध्यासीनानाम् आर्याणां सभ्यता-प्रगतेः अपि भूयसी प्रतिपत्तिः अस्माद् भवति। अथ न केवलं सन्धिविद्याम् अधिकृत्य अपि तु विग्रह-विद्यामपि अधिकृत्य एतद् नः बहुतरं खलु विज्ञापयति इत्येषोऽपरः तावद् अस्य महिम्नो हेतुः। प्रमाणग्रन्थेषु उच्चैः गण्यतया स्वानुशासनांशबलेन एतद् अनन्यसुलभां पञ्चमवेदेत्यभिख्यां किल भजते[३]। तेन 'को नामातः परम् अस्य महिमा स्याद्' नानाशाखीयरामायणग्रन्थवद् महाभारतोभय-शाखाग्रन्थौ अपि अन्योन्यस्माद् बहुतरं भिद्येते। तुल्यदेहभारौ तावद् उभयशाखाग्रन्थौ, एकत्र हि ग्रन्थे यदि द्वितीयग्रन्थस्य कश्चिदेकोंऽशः अनुपलभ्यमानः, द्वितीयस्मिन् ग्रन्थेऽपि तर्हि प्रथमस्य कश्चिदंशः परित्यक्तः लभ्यते। महाभारतस्य अखण्डितसमग्र-पुस्तकानि हस्तलिखितानि यथा भारते वर्षे बहुषु अधिष्ठानेषु सुरक्षितानि तथा हरिवर्षेऽपि बर्लिन-पेरिस-लण्डनाक्सफोर्डप्रभृतिषु नगरेषु। अथ बहूनि खण्डितानि अपि पुस्तकानि हस्ताङ्कितानि हस्तगतानि। परम् एकतममपि तेषां चतुःपञ्चवर्षशतेभ्यः पूर्वभवं नास्तीति तानि उपादाय तेषां सर्वेषाम् उपजीव्यस्य इति सुष्ठु प्रमाणी भवति॥

(ग) **शाखाग्रन्थाः**। (१) महाभारतं तावद् द्विशाखं प्रचरद् दृश्यते। तथाहि—

१—अधिसंग्रामम् अस्य विधयः वेदविधिवत् खलु क्षत्रियैः प्रमाणी क्रियन्ते॥

२—" 'कृष्णोपासनया खलु क्षत्रियाः कृतार्था भविष्यन्तीति' वै महाभारतानुशासनम्" इति सिल्वेनलेविः॥

३—'ब्राह्मण (वैदिक) धर्मानुयायिनां न वेदवद् ग्रन्थान्तरप्रामाण्यम्' इति कस्य अनभ्युपगतं स्यात्॥

(क) देवनागराक्षरशाखाकम् ( अथवा उदीच्यशाखाकम् ) ।

(ख) दाक्षिणात्यशाखाकं च ॥

प्रकृतमहाभारतग्रन्थस्य अद्यत्वे पुनः सर्गः कर्तुं न शक्यः, न वा तेषां मिथः उत्कर्षापकर्षौ तत्त्वतो ज्ञातुं शक्यौ ॥

(२) संस्करणानि । (अ) अस्य तावत् प्रथमं संस्करणं मूलमात्रं सहरिवंशपुराणं चतुर्भागविभक्तं खीष्ट १८३४ तमं वर्षम् आरभ्य १८३६ तमवर्षपर्यन्तं मुद्रितं भूत्वा प्रकाशम् जातम्[1] ॥

(आ) खीष्ट १८६३ तमेऽब्दे मुम्बपुर्यां हरिवंशपुराणवर्जं नीलकण्ठकृतटीकासंवलितं संस्करणं मुद्रितं बभूव । अत्र खलु यथा समीचीनाः पाठाः न तथा पूर्वोक्ते । एतत्त्व संस्करणं यावदद्य लब्धानेकावृत्तिकं दरीदृश्यते । उभे अपि तावत् संस्करणे इमे उदीच्यशाखाके सती न बहुधाऽन्योन्यं भिद्येते ॥

(इ) खीष्ट १८५५ तमाब्दाद् आरभ्य १८६० तमाब्दपर्यन्तं मदरासपुर्याम् अपि भागचतुष्टये संस्करणम् एकं तिलगुलिप्यां मुद्र्यते स्म । एतद्धि दाक्षिणात्यशाखाम् अन्वेति; अत्र च हरिवंशपुराणसमावेशः नीलकण्ठीयटीका चांशतः उद्धृताऽस्ति ॥

(ई) पुण्यपत्तनस्थायाः भाण्डारकर प्राच्यानुसन्धानशालायाः तावदेकं सामीक्षिकं ( Critical ) प्रायः उदीच्यशाखान्वयि महाभारतसंस्करणं सम्प्रति प्रकाशी भवति । अथ यावदिदानीं भारतवर्षाद् बाहीकेषु भूखण्डेषु न एकमपि महाभारतसंस्करणं प्राकाश्यम् अलभत ॥

(३) टीकाः । महाभारतस्य विद्यमानासु टीकासु या खलु कालज्येष्ठा सा सर्वज्ञनारायणोपज्ञाता । सा कथञ्चिदपि खीष्टचतुर्दशशताब्द्यधस्तनकालभवा भवितुं नार्हति । अपरा च टीका नीलकण्ठोदाहृता अर्जुनमिश्रकृता । एषा च खीष्ट १८७५ तमाब्दे कलिकातासंस्करणे लब्धप्रकाशा । महत्तमां निरूढिम् आरूढा च टीका महाराष्ट्रजनपदस्थकूर्पुर नामग्रामाभिजनेन नीलकण्ठपण्डितवरेण विरचिता । षोडशशताब्दीभवश्चायं नीलकण्ठः इति 'बर्नेलः' ( Burnell ) ॥

(४) **प्रतिपाद्याः विषयाः** । व्यासदेवोपज्ञं प्रकृतं महाभारतं पर्वसु अध्यायेषु च विभक्तमासीद् इति अनुमीयते । स एव विभागक्रमः वैशम्पा-

१—कलिकातायामपरं संस्करणं खीष्ट १८७७ तमाब्दे अर्जुनमिश्र-नीलकण्ठयोः टीकाभ्यां संवलितं मुद्रितम् ॥

यनेन अनुसृतः । तदीयं महाभारतम् उपशतपर्वसु विभाजितं बभूव। सौतिना सा संख्या सङ्कोच्य अष्टादशतां नीता[1] । सौतिनिबद्धे महाभारते असकृत् पर्व-तदन्तर्गतोपपर्वणोः समानं नामधेयं कृतम् उपलभ्यते यथा सभापर्वणि पुनः लघीयः सभापर्व[2] ॥

अथ अष्टादशपर्व व्यतिरिक्तं हरिवंशं नाम परिशिष्टभूतमिव यद् एकोनविंशं पर्व रामायणम उत्तरकाण्डम् इव महाभारतम् अन्वीयते तत खिलपर्व इत्युच्यते। स्वयंमहाभारतोक्ता एतच्छ्लोकसंख्या षड्विंशत्युत्तराष्ट शताधिकपञ्चनवतिसहस्रमिता ( ९५, ८२६ ), सा च स्थूलतया लक्षात्मिका इति तावल्लोके प्रसिद्धा ॥

**कथावस्तु** । 'आदि'-पर्वणि तावद् धार्तराष्ट्राणां पाण्डवानां च बाल्यं, द्रौपदीविवाहः, यादव वीरशौरिणा पाण्डवानां संस्तवः; सभापर्वणि इन्द्रप्रस्थे पाण्डवानाम् ऋद्धिः, द्यूते च द्रौपदीसहितस्य पाण्डवानां सर्वस्वस्य युधिष्ठिरेण हारणं, उपरिस्थितैकवर्षाज्ञातवासाय द्वादशवर्षवनवासाय पाण्डवानां विवसनम्; वनपर्वणि काम्यकारण्ये पाण्डवानां द्वादशवर्षवन-वासचर्या; विराट्पर्वणि च मत्स्यपतेः विराजः भृत्यत्वेन गुप्तात्मनां पाण्डवा-नाम् अज्ञातवासस्य त्रयोदशवर्षस्य अतिवाहनम् वर्ण्यते ॥

अथ उद्योगपर्वणि धार्तराष्ट्रेषु पाण्डवानां न्याय्यं दायभागं प्रदातुम् अप्रस्तुतेषु पाण्डवानां रणोद्योगः वर्णितः । ततः भाविषु पञ्चपर्वसु वासुदेव-पाण्डव-वर्ज सर्वक्षयकरणं भीषणं रणं विस्तरेण वर्णितम् । एकादशे पर्वणि मृतदाहसंस्कारं कीर्तयित्वा द्वादशे त्रयोदशे च युधिष्ठिरं प्रति भीष्मस्य राजधर्मोपदेशः निबद्धः । चतुर्दशे युधिष्ठिरस्य राज्याभिषेकः अश्वमेधो नाम यागश्च, पञ्चदशे गान्धारीधृतराष्ट्रयोः तपोवनगमनम्, षोडशे यादवानाम् अन्योन्यविनाशनः कलहः कृष्णस्य च सहसा व्याधकृतः वधः, सप्तदशे अर्जुनपौत्रं परीक्षितं प्रजापालन कर्मणि नियुज्य निर्विण्णपाण्डवानां मेरुं प्रति प्रस्थानम्, अष्टादशे च पाण्डवानां स्वर्गारोहणम् उदीर्यते ॥

## (ङ) उपाख्यानानि ।

महाभारतोपाख्यानानि सङ्ख्यया रामायणोपाख्यानानि अतियन्ति-

---

१—आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-साल्व-सौप्तिक-स्त्री—शान्ति-अनुशासनाऽ-श्वमेधाऽऽ-श्रमवासि-मौसल-महाप्रस्थानिक-स्वर्गा-रोहणाख्यानि अष्टादशपर्वाणि ॥

२—अनेन तावद् 'द्विकर्तृकः पर्वविभागः' इति अवश्यमनुमीयते ॥

तराम् । कतिपयानि हि तेषाम् उभयत्रापि अधीयन्ते । वनपर्वणि तावद् वनवासदुःखितान् पाण्डवान् सान्त्वयितुं बह्वी कथाः कीर्तिताः । तत्र च इमानि खलु मुख्यकल्पानि उपाख्यानानि भवन्ति—(१) रामोपाख्यानं, (२) भारते बलवत् लोकप्रियतां गतं नलोपाख्यानं, (३) सुप्रसिद्धं भारतीयादर्शपत्नीस्वरूपनिरूपकं सावित्रीसत्यवदुपाख्यानं, (४) कालिदासाभिज्ञानशाकुन्तलस्य उपजीव्यं शकुन्तलोपाख्यानं ॥

(५) यथारामायणवर्णनं गङ्गावतरणोपाख्यानं ।

(६) प्रलयस्य प्राचीनकथावर्णनपरं मत्स्योपाख्यानं ।

(७) उशीनर–शिबि–वृषदर्भ–प्रभृतिनृपोपाख्यानानि च ॥

**(च) कथं नु महाभारतेन साम्प्रतिकं रूपं धृतम् ।** अथ "महाभारतं सम्प्रति यथा बृहत्तरकायमुपलभ्यते तथा कथं परिणतम्" इति प्रश्नः विचारगोचरः भवति । महाभारतस्य यो हि भागः ऐतिहासिकमहाकाव्यस्य लक्ष्यी भवति स तु सर्वस्य पञ्चमांशः इति कथितचरमेव । उक्त काव्यगुणविरहितः शेषः चतुःपञ्चमांशात्मकः भागः सर्वः प्रायः उपदेश प्रधानः । एते च उपदेशघनाः अपघनाः वस्तुवृत्तान्त–कथादीनांपुनरुक्तिभिः,[1] उपाख्यान–प्रकृतिवर्णनादीनां द्विरुक्तिभिः,[2] भविष्यद्युगभविष्यद्वाणीभिः,[3] दुरूहविषयव्याख्यानैः,[4] काव्यालङ्काराणां प्रयोगैः[5] बहुभिः उपायान्तरैश्च खल्वत्र प्ररोहं प्राप्ताः । मुख्यश्च हेतुः अत्र "महाभारतं किल बृहद्धर्मशास्त्रं सर्वविद्यानिधानं[6] कथोपाख्यानादि-महापुराणं च स्याद्" इत्येवंभूता सौतेः हृदि स्थिता काऽपि स्पृहा एव । "कश्चित् प्रक्षिप्तांशः नाम्ना कीर्तनीयः इति चेत्, कृत्स्नं खलु शान्तिपर्व प्रक्षिप्तं प्रतिभाति इति ब्रूमः । सर्वं वै एतत् पर्व षण्मासान् विलम्बितमृत्योः भीष्मस्य मुखेन उपदिष्टम् अस्ति । परं

१—यथा, वनपर्वणि तीर्थयात्रानुवर्णनम् ॥

२—यथा, वनपर्वणि यक्षप्रश्नोपाख्यानं नहुषोपाख्यानमनुकरोति ॥

३—कादाचित्कः अविसीमविस्तरः आसां दृश्यते । यथा, युधिष्ठिरस्य भीष्मं प्रति तन्मृत्यूपायसंसूचनविषयकः प्रश्नः ॥

४—यथा, भीमेन दुःशासनरक्तपानम् । बहुधा च स्वयं व्यासः शङ्कासमाधानार्थम् उपतिष्ठते ॥

५—यथा, रणभीषणवर्णनानि, परिदेवितानि, प्राकृतिकदृश्यचित्रणानि च ॥

६—यथा, देशभूगोलवर्णने जम्बूखण्ड–भूखण्डयोः बृहद् वर्णनम् ॥

"हतो भीष्मः", "त्याजितः समरे प्राणान्" इत्यादिभिः सप्तमपर्वस्थवाक्यैः "प्रागेव भीष्मः कथाशेषतां गतोऽभूद्" इति तावद् विज्ञायते ॥

## छ (कालः)

न तावद् निखिलं खलु महाभारतम् एककालकृतिः। तिस्रः दशाः समनुभूय महाभारतेन प्रौढिः प्राप्ता इति तावत् प्रागुक्तमेव। ततः आद्यस्य महाभारतस्य रचनाकालः साम्प्रतिकस्य महाभारतस्य रचनाकालात् नैकशताब्दीभ्यः पूर्वम् आसीद् इति निर्विकल्पं सिद्ध्यति। अथ महाभारतरचनाकालनिर्णये वक्ष्यमाणा युक्तयः विशिष्य विचारपदवीम् अवतरन्ति—
(१) खीष्टैकादशशतके क्षेमेन्द्रप्रसवा 'भारतमञ्जरी' महाभारतस्य अवगतेषु संक्षेपग्रन्थेषु प्राचीनतमः प्रतिभाति। हस्ताङ्कितानां महाभारतग्रन्थानां प्रतिपाद्यार्थैः सह एतस्याः प्रतिपाद्यार्थान् सम्यक् तुलयित्वा "क्षेमेन्द्रस्य प्रकृता कृतिः अद्यतनमहाभारताद् नातिमात्रं विभिदे" इति बुह्लरपण्डिताः सम्प्रधारितवन्तः ॥

(२) खीष्टाष्टमशतकस्य उत्तरार्द्धे लब्धजनुषः शङ्कराचार्याः वेदाध्ययनेऽनधिकृतानां ( स्त्रीशूद्राणां ) धर्मज्ञानाय महाभारतं स्मृतित्वेन प्रदिशन्ति ॥

(३) निज तन्त्रवार्तिके अष्टमशतकमध्यकालभवाः महावैदिकाः कुमारिलाचार्यपादाः महाभारतस्य अष्टादशानां पर्वणां दशानूनेभ्यः पर्वभ्यः खलु ( यत्र असंशयं प्रक्षिप्तं १२ तमं १३ तमं १६ तमं च अन्तः प्रविष्टं ) अनुवदन्ति ॥

(४) सप्तमशतकोद्भवाः वाणसुबन्धुप्रभृतयः कवयः सर्वाष्टादशपर्वस्थोपाख्यानानि परामृशन्ति हरिवंशपरिचयं च आत्मनः आविष्कुर्वन्ति ॥

(५) कम्बोजाख्ये अतिदूरं वर्तमाने भारतपुरातनोपनिवेशे ज्वपट्शतखीष्टवत्सरे उत्कीर्णात् शिलालेखाद् ज्ञायते यत् तत्रत्याय कस्मैचिद् मन्दिराय रामायणमहाभारतग्रन्थाः उपायनं प्रादीयन्त, उपायनकृता च नित्यतत्कथाप्रबन्धोऽपि व्यधीयत इति ॥

(६) यव-बालि-प्रभृतिषु द्वीपेषु षष्ठशतके खलु महाभारतं ववृते। तत्कालादपि च प्राग् एतस्य अनुवादः त्रिविष्टपभाषायां समजायत ॥

(७) चतुर्थ-पञ्चमशतकभूदानपत्रेषु च स्मृतित्वेन महाभारतस्य उल्लेखः उपलभ्यते ॥

(८) द्विपञ्चाशदुत्तरचतुःशतख्रीष्टवत्सरे उत्कीर्णे एकस्मिन् शिलालेखे "व्यासो नाम महर्षिः पाराशर्यः लक्षपद्यात्मकं महाभारतं प्रणिनाय" इत्येतदर्थकः उल्लेखः प्राप्यते ॥

(९) सीरिया-देश-भाषायाम् उपलभ्यमानस्य शान्तिपर्वाध्यायत्रयानुवादस्य साक्ष्येण हर्तलशास्त्रिभिः पर्यवसीयते यद् इदानीं प्रचलितं पद्यबद्धं महाभारतं पञ्चमशतकीयात् महाभारतात् प्रायः भिद्यमानं नावलोक्यते। प्राच्यतुरुष्कस्थाने चीनीयसाहित्ये च नचिरात् पूर्वं कृतैः क्रियमाणैश्च प्रत्यग्रानुसन्धानैः महाभारतस्य एषा प्राचीनता पञ्चमशतकादपि पूर्वं प्रसरेद् यदि तदा किमाश्चर्यम्। महायान-सम्प्रदाय-साहित्ये च विधीयमाना अनुमार्गणा अत्र ग्रंथिम् इमाम् अधिकतरं विघटयिष्यतीति आशास्यते ॥

(१०) पञ्चाशत्तमे ख्रीष्टाब्दे दक्षिणापथे लक्षपद्यात्मकं महाभारतं लब्धप्रचारमासीद् इति तावद् द्योन-क्राइसस्तमस्य (Dion Chrysostom) साक्ष्येण अवगम्यते[२] ॥

(११) ख्रीष्टप्रथमशतसम्वत्सर्यां जीविना वज्रसूचीकारेण अश्वघोषेण हरिवंशस्थं पद्यमेकम् उद्धृतम् ॥

(१२) भासीयनैकरूपकाणां कथावस्तूनाम् उपजीव्यं तावद् महाभारतमेव ॥

एवं स्थिते "अस्मत्सम्वत्सरजन्मनः प्रागेव तावद् एतद् ऐतिहासिकं महाकाव्यं शास्त्र-संग्रहस्वरूपं दधार इति यद् महाभारतविचारणायां ननु सम्भावयामः तत्र आक्षेप्याः भवामः" इति मैक्डानलपर्यवसितं साधु समर्थयामः[३] ॥

---

१—महाभारतम् आलोचयता उपाध्याय होल्टज़मैनमहाशयेन ख्रीष्टस्य नवशताब्दीषु व्यतीतासु कदाचित् ब्राह्मणैः महाभारतं धर्मशास्त्रस्य रूपं प्रापितम्' इति यद् निर्धारितं तद् अनेन निरस्यते ॥

२—विलोकयन्तु चिन्तामणिविनायक वैद्यकृतां 'महाभारतमीमांसाम्' ॥

३—ख्रीष्टात् पूर्वं प्रथमतृतीयशतकयोः अन्तराले महाभारतनिर्माणं सम्पन्नम् इति चिन्तामणिविनायकवैद्याः । ख्रीष्टपूर्वं तृतीयशतकं महाभारतरचनाकालस्य ऊर्ध्वतनसीमा इत्यत्र तर्कस्तु एषः—

(क) अनेकशः यवननामोल्लेखः ॥

(ख) आदिपर्वणि नग्नक्षपणकोल्लेखः ॥

(ग) मेगास्थनीज़ः ज्ञान-समाज-धर्माणां यादृशीम् अवस्थां वर्णयति

अथ केचित् प्रक्षेपाः खीष्टद्वितीयशतके कृताः प्रतिभान्ति। यतो हि—

(१) हरिवंशे दीनाराख्या (Denarius) प्राचीन रोममुद्रा पठ्यते। हरिवंशपरिचयश्च आदिपर्वणः पूर्वभागे अष्टादशपर्वणि च लभ्यते। अथ हरिवंशपरिचायकैः भागैः दीनारप्रचारकालाद् अर्वाचीनैः भवितव्यम्॥

(२) नक्षत्रराशिमण्डलोल्लेखादपि एवम् तावद् अनुमीयते॥

(३) कचित् कचिद् यवन-सीथ्यन-(शक)-वाख्तर-(बैक्ट्रयन)-नाम्नो-पालम्भश्च भवति॥

अथ प्रकृतमहाभारतकालावधारणे एतत् तावद् विशेषेण अवधेयं भवति—

(१) पाणिनेः महाभारतं संस्तुतमासीद् इति दालमन (Dallmann) साक्ष्येण प्रमीयते॥

(२) खीष्टपूर्वपञ्चमशतकीये आश्वलायनगृह्यसूत्रे भारत-महाभारतयोः उल्लेखं चक्ष्महे॥

(३) खीष्टात् प्रायः चतुः शतवर्षपूर्वं प्रादुर्भूते बौधायनधर्मसूत्रे महाभारतोल्लेखाः वीक्ष्यन्ते॥

(४) बौधायनगृह्यसूत्रे च महाभारतीयं विष्णुसहस्रनामस्तोत्रं समुद्धृतं दृश्यते॥

(५) शान्तिपर्वणि विष्णोः दशावतरेषु बुद्धस्य नामधेयं न परिगण्यते॥

(६) मेगास्थनीजप्रणीते भारतवर्णने काश्चित् तथाभूताः कथाः याः खलु महाभारते एव उपलभ्यन्ते[१]॥

(७) प्रकृते हि खलु महाभारते ब्रह्मा सर्वेषां देवानां ज्येष्ठो देवः प्रतिपाद्यते। पालिभाषानिबद्धसाहित्येन च "ब्रह्मणो ज्येष्ठत्वं खीष्टपूर्वपञ्चम-शताब्दीतः प्रागेव प्रसिद्धमासीद्" इति ज्ञायते॥

(८) अन्यच्च, ज्यौतिषप्रमाणैः अपि कतिपये विद्वांसः "प्रकृतेन महाभारतेन नूनं खीष्टपूर्वपञ्चमशतकात् पूर्वमेव प्रणीतेन भवितव्यम्" "इति निश्चिन्वन्ति॥

---

तादृश्येव महाभारते पठ्यते। यथा मत्स्यभोजनम् अप्रियं भवद् आसीत्, शिवविष्णुदेवयोः उपासना प्रचरिता बभूव, व्याकरण-न्याय-वेदान्ताः निवृत्तनिर्वहणाः सञ्जाताध्ययनाश्च अभूवन्॥

१—तथाहि, अनिभ बृहदाकारकाः कीटाः किल चर्मां चख्नुः येन हिरण्यरेतांसि उदाजग्मुः इति॥

अथ महाभारतीयं कथा-वस्तु कतमत्कालिकम् ? इति जिज्ञासायां "वैदिक-कालिकम्" इति तावद् विस्त्रब्धमिव प्रतिवक्तुं शक्यते। कुरवः पञ्चालाश्चेति द्वावपि इतिहासविश्रुतौ वंशौ यजुर्वेदे वर्ण्येते वैचित्र्यवीर्यः नृपधृतराष्ट्रश्च काठक संहितायां किल कीर्त्यते ॥

### (ज) शैली।

रामायणेन आद्यं काव्यम् इव महाभारतेन हि ऐतिहासिक-पौराणिका-ऽऽख्यानिक नामभिः व्यपदिश्यमानस्य काव्यस्य आद्यं स्वरूपं प्रतिनिधीयते किल। अस्य तावद् भूयिष्ठम् अनुष्टुम्मयम्। यत्र तत्र च उपजातीनां वंशस्थस्य च अद्यत्वे अनुपयुज्यमानानि पुराणतरस्वरूपव्यञ्जकानि लक्ष्याणि लक्ष्यन्ते। कतिपयाश्च कथाः प्राचीनगद्यगदिताः। अथ पद्यबहिर्भूतानि 'कृष्ण उवाच' 'भीष्म उवाच' इत्यादीनि वाक्यानि अपि अधीयन्ते। अत्र च धर्मस्य निष्कृष्टं सारभूतं स्वरूपं यथा विवक्षितं तद् हि तावद्—

'यस्मिन् यथा वर्तते यो मनुष्यस्,
तस्मिन् तथा वर्तितव्यं स धर्मः।
मायाचारो मायया बाधितव्यः,
साध्वाचारः साधुना प्रत्युपेयः।'
इत्येतस्मिन् पद्ये परिभाषितं प्रतिभाति ॥

अथ भाषा तावदस्य प्रसन्ना एतदनुजानां काव्यानां भाषातः प्रायः सर्वत्र प्राञ्जलतरा च ॥

# अथ दशमः खण्डः

## रामायणमहाभारतयोः अन्योन्यसम्बन्धः।

### (क) परिमाणम्।

अथ साम्प्रतिकस्य महाभारतस्य परिमाणम् ईल्यडस्य ( Iliad ) ओडिस्याः ( Odyssey ) च संयुक्तात् परिमाणात् सप्तगुणं खलु अस्ति। रामायणस्य च परिमाणं महाभारतस्य चतुर्थम्। आधुनिकं महा-भारतं प्रकृतस्य समुपबृंहितं रूपम् इति आवेदितमेव पुरा, मैक्डानलमतेन प्रकृते ८८०० पद्यानि बभूवुः, चिन्तामणिविनायकवैद्यपण्डितैश्च "अन्यपद्य-वर्जं ८८०० कूटपद्यानि आसन्" इति निर्धार्यते। प्रथमं व्यासः इदं स्वशिष्यं

वैशम्पायनं प्रोवाच, स च इदं सम्वर्ध्य ( २४००० पद्यात्मकं विधाय ) सर्पसत्रे जन्मेजयं श्रावयामास । वैशम्पायनीयं महाभारतं लक्षपद्यशरीरकं विधाय सौतिः तदेतद् द्वादशवार्षिके यज्ञे शौनकाय जगाद । महाभारतस्य तदेतत् त्रिजन्मत्वम् अस्यैव पद्याद्[1] एकस्मात् बोध्यते । अथ रामायणस्य तु एतादृशम् आप्यायनं न श्रूयते ॥

## (ख) रचयितृत्वम् ।

रामायणं तावद् एकस्यैव कवेः—वाल्मीकेः—कृतिरस्ति । एष च कविः पुरातनीम् ऐतिहासिककाव्यस्य शैलीं विद्वान्, गुणालङ्कारमयस्य तस्य काव्यस्य कर्ता आदिकविः आसीद् यद् आख्यानकाव्याद् व्यतिरिच्यमानं सद् वस्तुतः 'काव्यम्' इत्यभिख्यया निर्देश्यत्वम् अर्हति । महाभारत तु अनेकेषां हि कर्तॄणां कृतिः अवधार्यते । महर्षिः व्यासः, यो हि किल वेदस्य चतुर्धा व्यासं कृतवान्, महाभारतं रचितवान् इति पारोवर्यविदो वदन्ति । महाशय होप्कन्स-मतेन च महर्षिः व्यासः महाभारतस्य न तथा रचयिता यथा सम्पादयिता आसीत् । न केवलं घटकावयवानां तुल्यरूपत्वे, एकजातीयकत्वे च, अपितु परिष्कृतच्छन्दोबन्धने सामाजिकवातावरणे च रामायणं महाभारताद् उत्कृष्यतेतराम् ॥

## (ग) मुख्यो ग्रन्थभागः ।

नहि उभयोः महाकाव्ययोः अन्यतरत् केवलमुख्यकर्तृनिबद्धग्रन्थात्मकम् उपलभ्यमानं खल्वस्ति । यद्यपि एतयोः हि परस्परं बहुधा भिद्यमानानि नानासंस्करणानि निभाल्यन्ते, अथापि तेषां तुलनात्मकपरिशीलनेन न मुख्यो ग्रन्थभागः निर्धारयितुं शक्यः ॥

महाभारतस्य दक्षिणापथसंस्करणम् अपि न कथञ्चित् मुख्यस्य ग्रन्थभागस्य समवधारणे साहाय्यसम्पादनाय अलम्, यतोहि न एतद् उत्तरापथसंस्करणाद् उत्कृष्यते गुणैः, अपकृष्यते एव तु अवगुणैः । यत्सत्यं नहि कोऽपि अतिशयो मुख्यो ग्रन्थभागः ऐतिहासिकमहाकाव्यस्य अस्य विद्यते, यतः भारते वर्षे साम्प्रतम् ऐतिहासिकमहाकाव्यनाम्ना व्यवह्रियमाणायाः कविरचनायाः स्वरूपं न जातुचित् पुरा परिनिष्ठितं खल्वासीत् । सर्वा हि एवंविधा कविकृतिः पुरा अत्र मौखिकोपदेशेन पाठकपरम्पराप्रवाहंप्राप्ता सती लेखकानु-

---

१—परामृश्यतां पूर्वोक्तं 'मन्वादि भारतं केचिद्' इत्यादि पद्यं नवमखण्डस्य ककारांकिते भागे ॥

लेखकगणैः स्वैरं चिरम् उपचयापचयौ नीयमाना अवतिष्ठ। तस्मात् मुख्यस्य ग्रन्थभागस्य पुनर्निर्माणे कृतः प्रयत्नो यदि नाम कदाचित् फलवान् स्याद् इति नाऽऽशास्यम्। एतदपि तावद् बहु मन्तव्यं यदि तत्तत्सम्प्रदायप्रसिद्धे महाकाये काव्येऽत्र स्थूलप्रक्षेपांशाः अवचिताः स्युः।

## (घ) रामायणमहाभारतयोः आवापः।

'कतरद् हि एनयोः प्रथमं विचकास' इति प्रश्ने, 'न अन्यतरद् अन्योन्यविकासं विना' इत्येव प्रतिवक्तुम् उचितम्; यतः यथा 'ऊर्ध्वकालिकं रामायणम्' इत्युक्त्या यादृशं रामायणम् अभिप्रेयते तथैव 'ऊर्ध्वकालिकं महाभारतम्' इत्युक्त्या तादृशं महाभारतम्। ऊर्ध्वकालिकं वा महाभारतम् अस्मान् वाल्मीकीयं रामायणं परिचाययति॥

## (ङ) उभयोः अन्योन्यव्यतिकरः।

गृह्यसूत्राणां कालस्य चरमाद् भागात् प्राक् नहि अन्यतरद् ऐतिहासिकं महाकाव्यं क्वचित् परामृष्टं वा कीर्तितं वा श्रूयते। प्रथमं गृह्यसूत्रेषु अन्येषु सूत्रग्रन्थेषु च भारतं नाम ऐतिहासिकं महाकाव्यं कृतपरामर्शं दृश्यते। तुलनात्मकपरिशीलनेन च उभयोः रामायणगतानि कतिपयानि स्थलानि महाभारते उद्धृतानि उपलभ्यन्ते। हरिवंशस्य रामोपाख्यानेन कतिपयोल्लेखान्तरजातेन 'अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि' इत्यादिभिः स्पष्टतरैः नामकीर्तनस्थलैश्च रामायणस्य महाभारताद् वयोवर्षीयस्त्वम् अवसीयते। हॉपकिन्समहाशयस्तु 'न खलु इमानि स्थलानि वाल्मीकेः ऐतिहासिक-महाकाव्यस्य प्रथमप्रणेतृत्वेन महाभारतकारतः पूर्वतनत्वं प्रमाणयितुं प्रभवन्ति, एतावन् तु तावद् दर्शयितुं क्षमन्ते यद्-महाभारतस्य समाप्तितः प्रागेव कस्मिंश्चित् काले वाल्मीकी रामायणं विरचितवान्, यथाहि महाभारते उपलभ्यमानेन वायुपुराणनाम कीर्तनेन केवलम् इदं ज्ञायते यत्—महाभारतस्य समाप्तितः, न तु उपक्रमतः, पूर्वं वायुपुराणं नाम कोऽपि ग्रन्थः अविद्यत, इति मन्यते। इदमपि चात्र ध्येयमस्ति यत्—ऊर्ध्वकालिके रामायणे महाभारतस्य संस्तवः समुपलभ्यते। एवं हि—

'अद्यत्वे रामायणस्य यौ रूपाकारौ दृश्येते न तौ महाभारतस्य आरम्भात् पूर्वं परिपूर्तिम् इतौ' इति अनुमीयते। रामायणाच्च 'जन्मेजयो

नाम कोऽपि वीरः पुरा बभूव' इति ज्ञायते, श्रूयन्ते च अत्र कुरु-पञ्चाल हस्तिनापुरनामानि । तस्माद् ज्ञायते यत्—

(१) 'रामोपाख्यानं पाण्डवोपाख्यानात् प्राचीनम् ।

(२) पाण्डवोपाख्यानं वाल्मीकीयरामायणात् प्राचीनम् ।

(३) सम्पूर्णैकग्रन्थत्वेन च विचार्यमाणं रामायणं सम्पूर्णैकग्रन्थत्वेन विचार्यमाणाद् महाभारतात् प्राचीनमस्ति ।' इति ।

## (च) द्वयो रचना-स्थाने ।

सदृशार्थप्रायाणां प्रकरणानाम् आभाणकानां च सूक्ष्मेक्षिकावीक्षणेन रामायणस्य उत्तरकाण्डे अनुगङ्ग क्षेत्रस्य नाना कथाः लभ्यन्ते. महाभारतस्य चापि पूर्वकालिकाद् भागात् साम्प्रतं पञ्चाप (पंजाब)—नाम्ना प्रतीतस्य प्रदेशस्य रीति-नीतयः उन्नीयन्ते, उत्तरकालिकेभ्यः उपदेशप्रधानेभ्यः भागेभ्यश्च कोसलविदेहानां कथावार्ताः अवगम्यन्ते । ज्ञायते यत्—

'ऊर्ध्वकालिकरचनाकाले द्वयोरपि महाकाव्ययोः प्रणयनं समाने देशे बभूव ।' इति । द्वयोःग्रन्थयोः पूर्वकालिकरचनाभागौ तु अधिकृत्य न किमपि वक्तुं शक्यम् ।

## (छ) इतरेतरसादृश्यम् ।

(१) शैली । 'न केवलं घटकावयवानां तुल्यरूपत्वे एकजातीयकत्वे च अपि तु परिष्कृतच्छन्दोबन्धने सामाजिकवातावरणे च रामायणं महाभारताद् उत्कृष्यते तराम्' इति तावद् उक्तचरम् । अथापि महाकाव्यद्वयी शैल्या अन्योन्यस्य अनुहरति । हॉपकिन्स-महाशय अन्विष्य प्रायः शतत्रयं सदृशानां वाक्यानां वाक्यखण्डानां च उभाभ्याम् उपलब्धवान् । तथा हि, शान्तिमय-प्रसङ्गवर्णनावसरेषु 'नोत्कण्ठं कर्तुमर्हसि' इति उभयत्र पठ्यते ।

(२) उभयत्र 'सेना भिन्ना नौरिव सागरे, सेना भिन्ना नौरिवागाधे इत्यादयः समानाः उपमाः, समानानि च रणवर्णनानि निर्दिश्यन्ते ।

(३) कथावस्तुसादृश्यं च उभयोः विशेषेण दर्शनीयं भवति । सीता-द्रौपद्यौ उभे नायिके, नायिकेतिव्यपदेशेन यदि ते व्यवहारम् अर्हतः, यथा जनिम् अलभतां रहस्यं किमपि एतत् लोकं प्रतिभाति । स्वयंवर रीत्या जातेऽपि द्वयोः उद्वाहे न अन्यतरा वरं स्वयं वव्रे; द्वयोश्च स्वयंवरयोः शारीरिकमेव हि बलं परमं प्रमाणं बभूव । द्वयोः महाकाव्ययोः नायकौ वन-

वासस्य, नायिके (सीताद्रौपद्यौ) च (रावणजयद्रथाभ्यां कृतस्य) अपहरणस्य क्लेशम् अनुभवतः। इत्थं द्वयोः कथा-वस्तुनी अन्योन्यस्य उपस्कुर्वाणे विलोक्येते।

(४) द्वयोश्च महाकाव्ययोः पौराणिकाख्यानेषु (दार्शनिकसिद्धान्तेषु च) महत् साम्यम् आलोक्यते। उभयत्रैव ऋग्वेदकालिकी प्रकृतिपूजा लुप्तप्राया प्राप्यते। वरुणादित्याश्विप्रभृतयः देवाः अन्तर्धानं गताः अवगम्यन्ते। न च उषस्सदृशीनां देवतानां नामाऽपि श्रूयते। अमीषां समेषां पदं विधिहरिहरेति देवत्रय्या च दुर्गा गणेश कुवेरेति देवत्रय्या च गृहीतम् इव भाति। अवतारवादस्य च प्राधान्यम् उपलभ्यते। तथाहि इन्द्रसदृशाः देवाः पुत्रदारवन्तः कुटुम्बिनो भूत्वा अधिस्वर्गं वसन्तः हर्म्येषु रममाणाः साधारणमर्त्यलोक-जनवत् व्यवहरन्ति। अथ द्वयो र्हि महाकाव्ययोः देवमूर्तिप्रतिष्ठापनार्थं देवालयनिर्माणविधिः लावणिक-मृण्मय-धातवीयानां देवमूर्तीनाम् पूजा च श्रूयते। इत्थं हि उभयत्र महाकाव्ययोः समानं पौराणिकत्वं प्रौढिं प्राप्तम् उपलभ्यते॥

# एकादशः खण्डः।

## पुराणानि।

### (क) पुराणानाम् उद्भवः।

पुराण शब्दो हि अथर्ववेदे ब्राह्मणेषु च सर्ग-विद्येत्यर्थे पठ्यते। महाभारते तु शब्दोऽयं पुरातनोपाख्यानबोधकत्वेन प्रयुज्यमानो दृश्यते।

विष्णु-वायु-ब्रह्माण्ड पुराणेभ्यो वयं सर्वपुराणेषु प्राचीनतमस्य पुराणस्य जन्मकथां विद्मः। (भागवते च यैषा कथा श्रूयते सा कथान्तरेभ्यो बहुधा भिद्यते, अवरकालिकी च भाति। तस्मान्न सा विश्वासस्य विचारस्य च आस्पदम् भवति।) "व्यासो हि वेदान् चतुर्धा विभज्य तान् आत्मनः चतुरः शिष्यान् उपदिष्टवान्। ततश्चासौ कथाः आख्यायिकाः उपाख्यानानि, गीतानि, लोकवादांश्च संगृह्य पुराणं नाम ग्रन्थविशेषं ग्रथितवान्, 'इतिहासेन च साकम् अमुं ग्रन्थं रोमहर्षणं (लोमहर्षणं वा) नाम पञ्चमं स्वशिष्यम् पाठयामास। तदनन्तरं च तेन महाभारतं[1] खलु निबद्धम्," इति श्रूयते किल।

---

१—स्वयं महाभारतादेव पुराणस्य प्राचीनत्वं स्पष्टं ज्ञायते।

व्यासः आद्यस्य पुराणस्य कर्ता उत नैव इति विवादस्तु अकिञ्चित्करोऽस्माकं इदानीतनाय प्रयोजनाय। एतावत्तु केवलम् अत्र अस्मत्प्रयोजनोपयोगि भवति यत् पुरा पुरुरूपाः परम्पराप्राप्ताः नाना कथाः किल लोके प्रतीताः आसन्, ताश्च उपादाय महाभारतस्य निर्माणं समपद्यत। अन्यान् मन्त्रान् संगृह्य पुराणनिर्माणम् अभवत् इति चेत्, तत्र किमु अद्भुतम्॥

## (ख) पुराणसंवृद्धिः

व्यासप्रोक्तां पुराणसंहितां षोढा विभज्य रोमहर्षणः तासां षण्णां संहितानां प्रत्येकं क्रमेण आत्मनः षट् शिष्यान् पाठयामास। तेषु च शिष्येषु त्रयः पृथक् पृथक् तिस्रः संहिताः सम्पादयामासुः याः खलु स्वस्वकर्तृनाम्ना प्रसिद्धिं जग्मुः, रोमहर्षणीयसंहितया च सार्धं मूलसंहिताः इति लोके विदिताः बभूवुः। एताः सर्वाः चतुर्भिश्चतुर्भिः पादैः विभक्ताः, प्रतिपाद्ये अर्थे समानाः सन्त्योऽपि वचोभङ्ग्या विभिन्नाः आसन्॥

नहि एताः संहिताः साम्प्रतम् उपलभ्यन्ते। रोमहर्षणस्य अन्येषां च कतिपयानाम् उक्त-पुराण-कर्तॄणां नामानि तावत् कतिपयेषु पुराणेषु महाभारते च प्रष्टृतया प्रतिवक्तृतया वा पठ्यन्ते। स्थलैश्च तैः, येषु नामानि इमानि पठ्यन्ते, पुरातनस्य पुराणस्य तैः अवशिष्टैः भागैः भवितव्यं नाम ये वायुनि ब्रह्माण्डे च पुराणे अनुप्रवेशं प्राप्तवन्तः। अपिच, पूर्वोक्ताश्चत्वारः पादविभागाः प्रक्रिया, अनुषङ्गः, उपोद्घातः, उपसंहारश्चेति चतुर्भिर् नामभिः एतयोरेव पुराणयोः केवलम् आसाद्यन्ते, नान्येषु केषुचित्।

षण्णां रोमहर्षणान्तेवासिनां मध्यात् पञ्च ब्राह्मणाः बभूवुः, तस्मात् पुराणं ब्राह्मणानाम् आत्मसम्पदा किल बभूव। ततस्तु साम्प्रदायिकानि च अभिनवानि पुराणानि कालक्रमेण उदयम् उपायन्। स्वयं पुराणेषु एव प्राप्यमाणेभ्यः प्रमाणेभ्यः ज्ञायते यत् नानादेशोद्देशेषु उद्भूय विविधानि पुराणानि शनैः शनैः परिपोषं प्राप्तानि, इति॥

## ( ग ) पुराणानां प्रतिपाद्यार्थाः

आख्यानानि, उपाख्यानानि, गाथाः, कल्पवाक्यानि च उपादाय पुराणानां सर्गः संजातः इति पूर्वोक्तं स्मृत्वा प्राचीनतमपुराणविषयः अनुमातुं न अशक्यः।

[१]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

इति श्लोकेन पुराणविषयो यो निदर्शितः स केवलं आदिमपुराण-सम्बन्धको ज्ञेयः, यदा धर्मसिद्धान्ताः तीर्थमाहात्म्यानि धर्माङ्गान्तराणि चेति बहुविधं अर्थजातं न खलु पुराणनिक्षिप्तम् अभूत् । इदानीं तु पुराणेषु उपदेशप्रकरणानि सङ्ख्यया इतिहासप्रकरणानि अतिवर्तमानानि पश्यामः[२] । तत्र च अनैतिहासिक्यः कथाः, विष्णुदशावतारवर्णनानि, देवपूजाविधयः, पर्व व्रतनियमाश्चेति नाना विषयाः उपलभ्यन्ते । वेदप्रामाण्येन तुल्यं पुराणप्रामाण्यं खलु प्रख्यायते । वायुपुराणे च वेदपुराणत्वम् आत्मनः उद्दिष्टम् । पुराणानां श्लोकाः स्थलानि च खलु श्रुतिः इति, ऋग् इति, सूक्तम् इति च पदैः व्यपदिश्यन्ते । वेदवच्च ईश्वरनिःश्वसितत्वं पुराणानाम् उद्घोष्यते । बहुषु पुराणेषु वेदसंहितानाम्ना तेषां व्यवहारो दृश्यते, वेदाध्ययनेन च यत् फलं तदेव, तदपि अतिशयानं वा, फलं पुराणाध्ययनेन निगदितम् ॥

## (घ) पुराणेषु इतिहासांशः ।

वक्ष्यमाणेषु पुराणेषु तावत् कलौ भारतभुवं भुक्तवतां भूभुजां चरितानि अधीयन्ते ।

(१) मत्स्य-वायु-ब्रह्माण्डानि । अस्याः पुराणत्रय्याः कथावर्णनेषु अद्भुतं खलु साम्यम् आलोक्यते । वायु ब्रह्माण्डयोः वर्णन-महासाम्यबलात्

१—सर्ग-प्रतिसर्ग-मन्वन्तरवर्णनं तावत् सर्वथा कल्पनाप्रसूतं प्रतिभाति । वंश-वंशानुचरितप्रसङ्गास्तु इतिहासमूलकाः कथिताः अनुपेक्षणीयाश्च सन्ति ॥

२—रूपं भाषां विषयं चाधिकृत्य पुराणानि ऐतिहासिकमहाकाव्यद्वयी स्मृतयश्चेति त्रीणि अपि वाङ्मयाङ्गानि परस्परम् अन्वीयमानानि दृश्यन्ते । एषु हि न केवलं ते ते श्लोकाः, स्थलानि अपि अक्षरशः एकस्माद् अन्यत्र समुद्धृतानीव विलोक्यन्ते, तेषां विषयपार्थक्यमपि यथावत् कर्तुं न शक्यम् । तथाहि तत्तद्-विषयसादृश्यबलेन महाभारतमेव स्मृति-पुराणैतिहासिकमहाकाव्येति नाम्ना मध्यात् केनचिदपि नाम्ना व्यपदेष्टुं शक्यम् ॥

उपाख्यानेतिहासोभयमयत्वात् पुराणानि खीष्टमतानुयायिनां पैराडाइस लास्टाख्येन ( Paradise Lost ) काव्येन साम्यं बिभ्रति ॥

तयोः एकस्यैव पुराणस्य शाखाभेदेन द्विरूपत्वम् अनुमीयते। मत्स्यं च तथा ताभ्यां साम्यम् अभजमानम् अपि प्रायेण तत्सदृशकथाबहुलं वर्तते। तस्मात् कञ्चन एकमेव पुराणग्रन्थम् आश्रित्य पुराणत्रयी एषा प्रवृत्ता, इति प्रतिभाति। श्लोकशैली च अस्याः ऐतिहासिकमहाकाव्यस्य श्लोकशैलीम् अनुकरोति, एकेनैव च श्लोकार्धेन प्रायः अत्र एकनृपवर्णनं समाप्यते।

(२) विष्णु-भागवते। पूर्वोक्तपुराणत्रयव्यपेक्षया एतत्पुराणद्वयं संक्षिप्ततरं वर्तते। विष्णु च प्रायेण गद्यमयम् अस्ति। अपि नाम द्वे एव पुराणान्तरयोः संक्षिप्ततरे रूपे स्तः॥

(३) गरुडम्। पूरूणाम् इक्ष्वाकूणां बृहद्रथानां च नृपाणां चरितैर्-निबद्धं भागवतापेक्षया संक्षिप्ततरं पुराणम् एतत् पुराणानां परम्परायां चिरेण लब्धसत्ताकं प्रतीयते॥

(४) भविष्यम्। पुराणेऽस्मिन् निबद्धानि चरितानि प्रायः अतिशयोक्तिरञ्जितानि सन्ति। तथाहि, एतत्पुराणवचनेन पौरवाणां पृथिवी-पालानां प्रत्येकं न्यूनातिन्यूनं सहस्रं वर्षाणि भुवं शशास। ख्रीष्टीयैकोन-विंशतितम्यां शताब्द्यां घटितानां वृत्तानाम् अपि भविष्यद्वाण्यः पुराणेऽत्र कृताः सन्ति॥

एषां पुराणानां वर्णनानि मुख्यतया भविष्यपुराणस्यापि उपजीव्यस्य कस्यचित् पुरातनस्य पुराणस्य वर्णनेभ्यः गृहीतानि इति अनुमीयते। एषु हि वर्णनेषु महाभारतयुद्धकालाद् आरभ्य वर्णयितुः कालं यावद् जातानां नृपाणां चरितानि भविष्यद्विषये प्रश्नाश्च विविधाः पठ्यन्ते, वक्ता चात्र नैमिषारण्यस्थः रोमहर्षणो नाम सूतः, श्रोता च सौतिरित्युपपदप्रथितः तत्सुतः ऋषि-मुनि-वर्गो वा॥

एवं हि अष्टादशसु पुराणेषु केवलं सप्तसु वंश-वंशानुचरिते तावद् उप-लभ्येते। अवशिष्टानि एकादश[1] पुराणानि भारतीयराजनीतीतिहासानुध्या-यिनां निष्प्रयोजनानि एव खलु भवन्ति॥

---

१—आग्नेयं, कौर्मं, पाद्मं, मार्कण्डेयं, ब्राह्मवैवर्तं, ब्राह्मं, वामनं, वाराहं, स्कान्दं, शैवं, लैङ्गं चेति एकादश। अष्टादशसु पुराणेषु अतिचतुर्लक्षसङ्ख्याकाः श्लोकाः सन्ति। परम् एकस्मिन् यदि सप्त सहस्राणि, अन्यस्मिन् तदा एकाशीतिः सहस्राणि श्लोकाः लभ्यन्ते। सुरक्षादशा सर्वाणि अतिशयानत्वेन गृह्यमाणे गारुडे सप्तसहस्रेभ्योऽपि न्यूनाः श्लोकाः दृश्यन्ते॥

अतिश्लाघा अत्युपेक्षा चेति उभे अपि गती पुराणानां दृश्येते। अचिर-पूर्वं यावद् विदुषां विशयविषयाः पुराणानि खलु अभूवन्। साम्प्रतं तु 'न हि पुराणगतः सर्वोऽपि इतिहासांशः मिथ्या भवितुम् अर्हति।' इति विश्वासः विद्वत्सु वर्धमानः विलोक्यते। द्व्यधिके एकोनविंशति—शततमे ख्रिष्टाब्दे विंसेंट स्मिथमहोदयः 'मात्स्ये वर्ण्यमाने नानानृपतीनां नाम्नां पौर्वापर्ये शासनकाले च न लेशतोऽपि संदेहप्रसरो विधातुम् उचितः।' इति प्रादर्शयत्। सत्यपि च विपुल'विकृतिदोषसंभवे पुराणेषु प्राप्यमाणैः इतिवृत्तैः ब्राह्मणग्रन्थ-कालसदृशस्य प्राचीनकालस्याऽपि, किमुत ततोऽर्वाचीनस्य कालस्य, अनल्पं ज्ञानं नः समर्प्यते। अस्ति च एष कोऽपि महिमा पुराणानां यत् तेभ्यो वेद-ब्राह्मणादि ग्रंथ सम्बन्धिनीनां ब्राह्मणिक-सम्प्रदाय-प्ररूढानां रूढीनां प्रति-योगिन्यो राजन्यवंशरूढयो विज्ञायन्ते[१]। राजन्यरूढीनां च एतदेव गौरवं यत् ताभ्यः, क्षत्रियाभिप्रायानुरोधेन, प्राचीनस्य भारतदेशस्य तदीयराजनीति-दशायाश्च दर्शनं संभवं भवति॥[२]

प्राचीनराजवंशवर्णनानि। नहि पुराणस्थेषु राजवंशवर्णनेषु सर्वेषां राज्ञां चरितानि वर्णितानि निर्वर्ण्यन्ते। येस्तु राजन्वतीं भूमिम् आहुः, ते केवलं कीर्तिमन्तः क्षितिपतयोऽत्र कीर्तिताः। चरितानि इमानि न ब्राह्मणानां (ब्राह्मणानां विरागप्रधानत्वात् लौकिकेषु व्यापारेषु रुचेः अभावात्),

---

१—ब्राह्मणिकसम्प्रदायरूढिपक्षे वक्ष्यमाणास् त्रुटयो वर्तन्ते—

(क) अत्र केवलं धर्मविषयक विचारचर्चाऽस्ति यया ऐतिहासिकानां प्रयोजन सिद्धि नं भवति।

(ख) एतद्रूढिप्रवर्तका ब्राह्मणा इतिहासधिया हीनाः आसन्।

(ग) उपांशु कुटीचका भवन्तश्च ते लौकिकतथ्यमयं ज्ञानम् अर्जयितुम् अक्षमा बभूवुः। तथाहि, शुनःशेपोपाख्याने अयोध्या नगरी ग्रामत्वेन अभि-हिताऽस्ति॥

२—भारतोपरि आर्यैः उपार्जिते विजये क्षत्रियैर्महत् कार्यं कृतं खलु। तेषां च क्षत्रियाणाम् अवदानानि सामाजिकपदानि च जिज्ञासुभिस् तेषां रूढयः प्रथाश्चावश्यम् अध्येतव्याः। तथाहि, आर्यैः अधिकृतत्वेन आख्यायमानेषु देशविशेषु ऐला नाम क्षत्रियाः कथं प्रभुत्वम् आसवन्तः इति चेत् बुभुत्सितम्, नहि पुराणानि अन्तरा, ब्राह्मणवाङ्मये कोऽपि ग्रन्थोऽस्य महतो रूपपरि-वर्तनस्य विषये लेशतोऽपि अस्मत्साहाय्यं सम्पादयति॥

अपि तु राज्ञां चारणकवीनां, मौखिकीभिः रूढिभिः स्वरक्ष्यन्त इति प्रतीयते। ननु चारणैः तादृशमहाकायपुराणानां स्मरणं कथं संभवम् इति चेत्, यथा ब्राह्मणैः अक्षरशः स्वग्रन्थाः स्मृतिविषयम् आरोप्यन्ते तथा चारणैरपि इति प्रत्युच्यते। अपि च, भारतवर्षे 'प्राचीनान् वंशान् स्मर्ता पुरुषो महीयते लोके सम्पद्यते च यशसा' इति स्थितेः परमलोकप्रियत्वाच्च वंश वर्णनेषु अमीषु नहि प्रमादस्य महतः संभावना तावदस्ति[1]॥

सूर्याचन्द्रमसौ द्वौ पुरुषौ सर्वेषां भारतीयक्षत्रियवंशानां मूलप्रवर्तकत्वेन तावत् प्रसिद्धौ। पुराणानाम् ऐतिहासिकग्रन्थत्वम् उररीकृत्य विवेचकचक्षुषा तेषां पारायणे सति प्राचीन भारतविषयकाणि नैकविधानि उपयोगीनि तथ्यानि लप्स्यामहे। पुराणेषु न केवलं पुरूणां कोशलानां मगधानां च, अपि तु अर्वाचीनानां शिशुनागानां, नन्दानां, शुङ्गानां, कण्वानाम्, आन्ध्राणां च, वर्णनस्य उपलम्भात्, महत् तेषां गौरवम् अनुपश्यामः॥

[ पार्जिटरमहाशयस्तु—'पश्चिमां दिशम् अभिवर्तमानाः खलु आर्याः देशान्तर वासिनो बभूवुः' इति तत्त्वं पुराणसाक्ष्यबलेनैव प्रादर्शयत्। सिद्धान्तश्चायं प्रकरणेऽत्र परममनोरञ्जकः भाति। पुराणविद्याविदो हि ऐलानां ( आर्याणां ) मूलनिवासस्थानीभूतम् 'इलावर्तं' 'नाभेः' ( भारतस्य ) उत्तरेण इति वदन्ति। इमामेव, न तु उत्तर पश्चिमां, दिशम् आर्याः अद्यावधि पूतां मन्यन्ते। २७५० तमात् खीष्टपूर्वाब्दात् अपि पूर्वं कदाचित् आर्याः हिमवतः मध्यप्रदेशं परित्यज्य भारतं प्रविष्टाः, द्रुह्यवश्च १६०० तमस्य खीष्टपूर्वाब्दस्य निकटे कदाचित् भारतं विहाय उत्तरपश्चिमां दिशं प्रस्थिताः इति तावद् विद्वद्भिः आस्थीयते। १४०० तमे खीष्टपूर्वाब्दे उत्कीर्णेषु बोग़ज़-कोइ-शिलालेखेषु हि भारतीय देवानां नामानि पठ्यन्ते। एतच्च एवं व्याख्येयं यत् भारतम् आगत्य अत्र कृतनिवासानाम् आर्याणां प्राचीनतमः ग्रन्थः ऋग्वेदः अङ्गीक्रियते, तद्रचनासमाप्तिकालश्च २००० तमं खीष्टपूर्वाब्दं निश्चीयते। तस्माद् एतत् संभाव्यते यत् १६०० तमे खीष्टपूर्वाब्दे भारताद् उत्तरपश्चिमां दिशं गच्छद्भिः द्रुह्युभिः

---

१—कालक्रमेण तत्र केषांचिद् भागानां स्मृतिपथात् च्यवनस्य, केषुचिच्च अधिकावापस्य संभवे सत्यपि, नहि निखिलाऽपि रूढिपरम्परा अप्रत्येतव्या भवितुम् अर्हति। क्षत्रियरूढयः स्वतः प्रमाणत्वेन परीक्षणीयाः प्रेक्षणीयाश्च॥

आत्मना सह भारतीयदेश: अनाचिपत इति। इत्थं तर्कोऽयम् आर्याणां पश्चिमगमनवादं पुष्णाति। अपरञ्च, ऋग्वेदीये मन्त्रे एकस्मिन्[1] (१०, ७५) श्रूयमाणः कतिपय भारतीयनदी-नामक्रमः पश्चिमगमनवादे एव उपपद्यते, न तु पूर्वगमनवादे। वस्तुतस्तु 'पूर्वगमनवादः पश्चिमगमनवादात् पूर्वं यूरोपीयविद्वत्सु प्रसिद्धिं गतः' इति तर्कं विहाय नान्यः कोऽपि तर्कः पूर्वगमनवादं समर्थयितुम् अलम्। परं कथम् एतावतैव बाधकप्रबलप्रमाणाभावे भारतीयरूढिम् आरूढः पश्चिमगमनवादः अपास्येत? भारतीयां च रूढिं मिथ्या कर्तुम् एतत् तावत् वक्तव्यं स्यात्—कस्मै प्रयोजनाय कथं च एषा निराधारम् उद्भाविता आसीत्॥ ]

## (ङ) पुराणरचना कालः।

पुराणानां निर्माणकालं निर्धारयितुकामः यूरोपीयशास्त्रिणः पुराणेषु उपलभ्यमानानि अभिनवतमानि इतिवृत्तानि तथ्यान्तराणि वा प्रायः समाश्रयन्त, एतच्च खलु उपेक्षितवन्तः यत् कस्यचिद् भवनस्य साहित्यिकग्रन्थस्य वा निर्माणकालः तत्र निर्वर्त्यमानाभिः नवनवाभिः संवृद्धिभिः निश्चेतुम् अनुचितः।[2] अर्वाचीनतमाः संवृद्धीः एव आधारीकृत्य विल्सनमहोदयः 'ब्रह्मपुराणं, यद् हि पुरातनेतिवृत्तबहुलं वर्तते आदिपुराणनाम्ना चापि व्यपदिश्यते, खं इष्टयां त्रयोदश्यां चतुर्दश्यां वा शताब्द्यां निरमीयत' इति निरणैषीत्। 'कदा नु कृत्स्नं पुराणवाङ्मयम् अष्टादशधा विभक्तं भूत्वा नानानामभिः लोके व्यवहारम् आरूढम्' इति तावत् प्रतिवक्तुं न शक्यम्। अथापि 'ब्राह्मणग्रन्थानां प्राचीनसदृशे काले पुराणवाङ्मयं विद्यमानं बभूव' इति तावद् वक्तुं सुशकम्। एतत् तु केन प्रत्येतव्यं यत् 'वेदेभ्यो ब्राह्मणेभ्यश्च तं तम् अंशं सङ्कलय्य तदा वै पुराण-पुन-र्निर्माणम् अजायत यदा हि वेदाः ब्राह्मणानि च अनैतिहासिकग्रन्थतया प्रसिद्धिम् आयन्।' इति॥

आद्यतमस्य च पुराणस्य निर्माणकालम् अधिकृत्य अधोलिखितानि तथ्यानि विशेषेण अवधेयानि—

---

१—इमं मे गंगे! यमुने! सरस्वति! शुतुद्रि! स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जिकीये शृणुह्यासुषोमया॥

२—'कैम्ब्रिज हिस्टरी आव् इंडिया' नामके ग्रन्थे पुराणविषयकः ई. जे. रैप्सन-महाशयेन निबद्धो निबन्धो निभाल्यताम्॥

(१) हर्षचरिते बाणेन ( ६२० तम खीष्टाब्द निकटभवेन ) वायवीयं नाम पुराणं परामृश्यते ॥

(२) ४७५ खीष्टाब्दनिकटं सम्पादितेषु राज्ञां भूदानपत्रेषु केचित् तादृशाः श्लोकाः लभ्यन्ते ये वैयासिकमहाभारतीयानि उच्यन्ते, किन्तु पाद्मे भविष्ये च पुराणे पठ्यन्ते ॥

(३) मत्स्य-वायु-ब्रह्माण्डैः केचिद् अंशाः भविष्यपुराणाद् उपात्ताः इति तावत् तेषु स्पष्टम् उक्तम् । तेषाम् एव च साक्ष्येण स्पष्टं यत् खीष्टतृतीय शताब्द्यां भविष्यपुराणं विद्यमानं बभूव इति । मत्स्यपुराणे च भविष्य-पुराणाद् यद् आगतं तत् तृतीयशताब्द्याः अवसानात् प्राक्; वायुब्रह्माण्ड-पुराणयोस्तु चतुर्थशताब्द्याम् ॥

(४) आपस्तम्बसूत्रं ( खीष्टपूर्वतृतीयशताब्द्यां, ततोऽपि पूर्वं वा, रचितं ) 'भविष्यत्'-पुराणं प्रमाणत्वेन उदाहरति । 'भविष्यत्-पुराणम्' इत्यत्र च भविष्यत्पुराणयोः द्वयोः शब्दार्थयो विरोधे स्पष्टे सति अनुमीयते यत् पुराणेति शब्दः योगरूढतया तदा व्यवहारम् आगतः आसीत् । यौगिकस्य च शब्दस्य योगरूढतया प्रसिद्धिप्राप्तौ न्यूनातिन्यूनं शतद्वयी वर्षाणाम् अवश्यं कल्पनीया । तस्मात् 'खीष्टपूर्वं पञ्चमशताब्द्यां, ततोऽपि वर्षशतद्वयपूर्वं वा, पुराणं नाम वाङ्मयाङ्गविशेषः अवश्यं लोके तावद् अविद्यत ।' इति संभाव्यते ॥

[ आपस्तम्बे सूत्रे पठ्यमानं 'भविष्यत्' इति, खीष्टीयतृतीयशताब्द्यां प्रचारम् आगतं 'भविष्य' इति च द्वे नामनी विशिष्य विलोकनीये । साम्प्रतं तु लुप्त-प्रकृत-स्वरूपं भविष्यं नाम पुराणम् एव अवाप्यते ॥ ]

(५) कौटिल्यश्च अर्थशास्त्रे अनेकत्र परमप्रमाणत्वेन पुराणानि उदाहरति ॥

(६) शाङ्खायनश्रौतसूत्रे आश्वलायनसूत्रे च पुराणोल्लेखः उपलभ्यते ॥

(७) शतपथे ब्राह्मणे अन्वहम् इतिहासपुराणाध्ययनं विहितं विलोक्यते ॥

(८) नानापुराणानि परीक्षितात् पूर्वतनानि सर्वाणि इतिवृत्तानि भूततया', महाभारतयुद्धात् ( पार्जिटरमहाशयमतेन खीष्टपूर्वं ९५० तमे-

ऽब्दे जातात् ) शतवर्षोर्ध्वभावीनि च वृत्तानि 'भविष्यत्तया' निर्दिशन्ति। नात्र कस्यापि वैमत्यमिव विलोक्यते। तत् 'शतवार्षिकः कालोऽयं सन्धिकालोऽभवत् यदन्तरे सर्वाः तदानीं लोकप्रसिद्धाः ऐतिहासिक्यः जनश्रुतयः एकपुराणस्वरूपतया संगृहीताः अभूवन् इति उत्प्रेक्ष्यते॥

(६) ऐतिहासिकमहाकाव्यवत् पुराणानां निर्माणं परम्पराप्राप्तेभ्यः प्रत्नेभ्यः आख्यानेभ्यः चारणैःकृतम्। अथर्ववेदे च एतेषाम् आख्यानानाम् उल्लेखः वाङ्मयस्य अङ्गविशेषत्वेन इतिहास-पुराणेति साधारणनाम्ना च दृश्यते। छान्दोग्योपनिषदि सुत्तनिपातसदृशेषु प्राचीन बौद्धग्रन्थेषु च वाङ्मयाङ्गम् इदं पञ्चमवेदत्वेन उदाहृतम् अस्ति। अद्यत्वेऽपि च एवमेवाभ्युपगमः विदुषाम् आलोक्यते॥

## पुराणनिर्माणकालस्य अवरसीमा

नहि सर्वाणि पुराणानि युगपद् एकस्मिन्नेव अब्दे दशाब्दे शताब्दे वा संग्रथितानि आसन्। वस्तुतस्तु यस्मिन् रूपे तानि अधुना उपलभ्यन्ते तस्मिन् रूपे तेषाम् उदयः पृथक् पृथक् काले किल बभूव। वक्ष्यमाणाभिश्च वाचोयुक्तिभिः पुराणनिर्माण कालस्य अवरसीमा सुखम् अवधार्यते।

( १ ) मत्स्यपुराणे आन्ध्राणां तत्पतनपर्यन्तं (२३६ खी०) तदनन्तरभाविनां किलकिलवंश्यनृपाणां च इतिहासो लभ्यते। एवं च मत्स्यपुराणबलेन इतिहासधारा खीष्टतृतीयशताब्द्याः मध्यं प्रविशति॥

( २ ) विष्णु-वायु-ब्रह्माण्ड-भागवतपुराणानि इतिहासधाराम् इमाम् अग्रे गुप्तानाम् अभ्युदयं यावत् नयन्ति, समुद्रगुप्तस्य दिग्विजयवर्णनं तु तत्र नोपलभ्यते। इत्थम् अधिकाधिकं धारा एषा ३३० तमम् खीष्टाब्दं यावत् प्रवर्तमाना सिध्यति। भविष्यपुराणस्य च मत्स्य–वायु–ब्रह्माण्डानाम् उपजीव्यत्वात् 'खीष्टतृतीयशताब्द्यवसानात् प्राग् यस्मिन् कस्मिन् रूपे भविष्यपुराणेन अवश्यं वर्तमानेन भवितव्यम्' इति फलितं भवति। मत्स्यपुराणेन हि तृतीयशताब्द्याः तुर्यपादे वायु–ब्रह्माण्डपुराणाभ्यां च चतुर्थशताब्द्याः प्रथमपादे भविष्यपुराणतः स्वसत्तासामग्री उपात्ता या खलु तदा प्रारम्भिकगुप्तनृपचरितवर्णनैः पर्याप्तं संवर्धितपूर्वा बभूव॥

( ३ ) तर्कश्चायं पुराणेषु एतेषु उपलभ्यमानैः कलिनिन्दावर्णनैः[१]

१—सविस्तरोहापोहविज्ञानार्थं तु पार्जिटरमहाशयकृतः 'कलियुगीयनृपवंश' नामको ग्रन्थोऽवलोकनीयः॥

ऐतिहासिक-ज्यौतिषिकवर्णनविशेषैश्च इदं पोष्यते ॥

( ४ ) मूलग्रन्थपाठविशेषाश्च अनुमानम् इदं पुष्णन्ति ॥

( ५ ) चिन्तामणिविनायकवैद्यमहाशयश्च विषयेऽत्र वक्ष्यमाणं वायुपुराण गतं श्लोकं विशिष्य विलोकनीयं ब्रवीति—

अनुगङ्गं प्रयागं च साकेतं मागधांस्तथा।
एताञ्जनपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः॥

अत्र हि श्लोके ५०० तमे ख्रीष्टाब्दे क्षीयमाणायाः गुप्तानां शक्त्याः अवस्था संकेत्यते ॥

( ६ ) विष्णुपुराणे धारायाः ततोऽप्यग्रे प्रवर्तमानायाः दर्शनात् 'वायुपुराणाद् अर्वाक्कालभवं विष्णुपुराणम्' इति आयाति। आन्ध्रे जनपदे अष्टमनवमशताब्द्योः शासतः किलकिलयवननृपाः तावदत्र ( विष्णुपुराणे ) वर्णिताः। तस्माद् ज्ञायते यत् 'आनवमशताब्दि पुराणानि प्रक्षेपैः संवर्ध्यमानानि अभवन्।' इति ॥

( ७ ) चिन्तामणि विनायकवैद्यमहाशयाः विस्तरेण भागवतनिर्माणकालं विचारयन्तः पर्यवसाययन्ति यत्—'भागवतं नाम पुराणं ( नवमशताब्दी भवात् ) श्री शङ्कराचार्याद्[1] ऊर्ध्वं, (११६४ तमे ख्रीष्टाब्दे वर्तमानात्) गीतागोविन्दकृतः जयदेवाच्च[2] पूर्वं, प्रायेण ख्रीष्टदशमशतके, कदाचिद् रचितम् आसीत्।' इति ॥ पुराणम् एतत् लोकंपृणतया पुराणान्तराणि अतिवर्तते, सर्वासु च आधुनिकीषु भारतीयभाषासु अनूदितं समस्ति।

---

१—भागवते हि बुद्धः विष्णोरवतारविशेषत्वेन स्मर्यते, श्री शङ्कराचार्यस्तु बुद्धं प्रत्यवतिष्ठते ॥

२—नहि भागवते एकत्राऽपि राधाया नाम श्रुतिपथमवतरति। गीतगोविन्दं च सर्वात्मना श्रीकृष्णगतया राधारत्या व्याप्तम्। गीतगोविन्दाद् अनन्तरं चेद् भागवतं निरमास्यत तदत्र राधाया अपि नामधेयम् अवश्यं समावेशितम् अभविष्यत् ॥

# तृतीयोऽध्यायः

## भासः, कालिदासः, अश्वघोषश्च

### (१२) संस्कृतसाहित्ये भासस्य स्थानम्

अचिरपूर्वं यावत् संस्कृताध्यायिनः केवलं नाम्ना भासं नाम कविम् अजानन् । कालिदासेन स्व मालविकाग्निमित्रे सादरम् अस्य नामधेयम् उदीरितम् । कतिपयैः अन्यैरपि संस्कृतकविभिः एतन्नामधेयम् उदीर्य महामहिमशालित्वम् अस्य उद्घोषितम् । तथाहि; अस्ति तावद् राजशेखरीयं पद्यम्—

भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्
मेण्ठो भारवि कालिदास तरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥

जयदेवकृतस्य प्रसन्नराघवाभिधस्य नाटकस्य प्रस्तावनायां पठ्यते—

यस्याश् चकोरश् चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविता कामिनी कौतुकाय ॥

सूक्तिसंग्रहेषु च मनोहराणि कतिपयानि पद्यानि भासनाम्ना उदाहृतानि लभ्यन्ते । तथाहि, वक्ष्यमाणे द्वे पद्ये सुभाषितावल्याम् अवलोक्येते ॥

बाला च साऽविदितपञ्चशर प्रपञ्चा,
तन्वी च सा स्तनभरोपचिताङ्ग यष्टिः ।
लज्जां समुद्वहति सा सुरतावसाने,
हा काऽपि सा किमिव किं कथयामि तस्याः ॥
दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा,
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।

कालं वेत्ति, कथाः करोति, निपुणा मत्संस्तवे रज्यति,
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥

शार्ङ्गधरपद्धतौ, सदुक्तिकर्णामृते, सूक्तिमुक्तावल्यां च प्रायः दश पद्यान्तराणि भासनाम्ना संगृहीतानि दृश्यन्ते । भासविषयकम् एतावन्मात्रं विदुषां विदितम् आसीत् । त्रिवंद्रंवास्तव्येन पण्डित-त०—गणपतिशास्त्रिणा अवाप्तस्य त्रयोदशरूपक-समाहारस्य[1] प्रकाशनेन तु अद्यत्वे भासकीर्तिः उच्चैः प्रौढिं प्राप्ता वर्तते । त्रयोदशान्यपि रूपकाणि इमानि भासकृतानि इति तावत् त०—गणपति शास्त्रिणा पूर्वम् यद् अनुमितम्, तदेव पश्चात् कीथ-जैकोबि-स्टेनकोनो-लैकोटे-विंटरनिट्ज प्रभृतिभिः पाश्चात्यैः पण्डितैः अभ्युपगतम् । नाट्यगुणैः एतेषां रूपकाणां महति उत्कर्षे अप्रत्याख्येये सत्यपि बार्नेट-सिलवनलेवि-प्रमुखाः विपश्चितः अत्र प्रत्यवतिष्ठन्ते । तस्मात् प्रश्नोऽयं सविस्तरं विचारणीयः सञ्जायते । इदम् अत्र चिन्त्यम्— "ननु एकस्यैव अनेकेषां वा कर्तॄणां कृतिः त्रयोदशरूपकी इयम् ?" "एकस्यै वहि" इति चेत्, "कस्य ?"

## (१३) अपि नाम एकस्यैव कर्तुः कृतिः सर्वाणि रूपकाणीमानि ?

कृत्स्नं रूपकचक्रम् इदं तावद् एकस्यैव कर्तुः कृतिः इत्यत्र प्रायः सर्वेषां विदुषाम् ऐकमत्यम् आलोक्यते । वक्ष्यमाणाभिः वाचोयुक्तिभिश्च एककर्तृकत्वम् इदं साध्यते ॥

(१) संस्कृते रूपकान्तरेषु प्रायः सर्वत्र 'नान्द्यन्ते' इति श्लोकानन्तरमेव ॥

(२) रूपकान्तरेषु यत्र 'प्रस्तावना'-शब्द-प्रयोगो दृश्यते, तत्र रूपकेषु एषु 'स्थापना' शब्दः प्रयुज्यते । रूपकान्तरेषु च रूपकनाम-कविनामसंसूचार्थं या 'प्ररोचना' पठ्यते, तस्याः अत्र सर्वथा अभावो दृश्यते ॥

---

१—त्रयोदश रूपकसमाहारोऽयमेवं चतुर्धा विभाज्यः,

(क) प्रतिज्ञायौगन्धरायणं स्वप्नवासवदत्तं च, यत्र उदयनो नाम नृपो नायकत्वेन उपात्तः ॥ (ख) ऊरुभङ्गं, बालचरितं, दूतघटोत्कचं, दूतवाक्यं, कर्णभारं, मध्यमव्यायोगः, पञ्चरात्रं च, यदीयं कथावस्तु महाभारताद् गृहीतम् । अत्र हि ऊरुभंगं केवलम् असुखान्तं सम्पूर्ण-संस्कृतरूपक साहित्ये समासाद्यते ॥ (ग) अभिषेकनाटकं, प्रतिमानाटकं च, ययोः कथानके रामायणाद् गृहीते ॥ (घ) अविमारक-चारुदत्ते कविकल्पितकथानके ॥

( ३ ) न्यूनातिन्यूनं चतुर्षु रूपकेषु नान्द्यां 'मुद्रालङ्कार'-बलेन प्रदर्शितानि तत्तत्प्रधानपात्राणां नामधेयानि अधीयन्ते ।

( ४ ) वक्ष्यमाणाभिश्च रीतिभिः रूपकाणि इमानि मिथः सम्बद्धानि आसाद्यन्ते :—

(क) यथा भवभूतिकृतम् उत्तररामचरितं तदीयं महावीरचरितम्, तथा इह स्वप्नवासवदत्तं प्रतिज्ञायौगन्धरायणम्, उत्तरार्द्धतया अन्वेति । अनयोः द्वयोः तान्येव पात्राणि, सा एव शब्दप्रयोगपरिपाटी, शैली चरित्र-चित्रणा च इति बहुशः सादृश्यं पश्यामः । अन्यच्च, स्वप्नवासवदत्ते कतिचित् प्रतिज्ञायौगन्धरायणीयाः उल्लेखाः अपि लभ्यन्ते ॥

(ख) अविमारके प्रथमांके एकत्र नृपः स्वदुहितृयोग्यवरचिन्तां करोति, तथैव प्रतिज्ञायौगन्धरायणेऽपि महासेनः वासवदत्ताख्यायाः स्वसुतायाः कृते अभिजातं वीर्यवन्तं च वरम् अन्वेष्टुकामो दृश्यते ॥

( ग ) बालचरिते तृतीयांके प्रथमं 'दृश्यं' प्रायः सर्वथा पञ्चरात्रे द्वितीयांके प्रथमेन 'दृश्येन' तुल्यं वर्तते ॥

( घ ) अभिषेके स्वप्नवासवदत्ते च 'किं वक्ष्यतीति हृदयं परिशङ्कितं मे' इत्यादि कानि कानिचित् वाक्यानि वाक्यशकलानि वा समानानि सन्ति । बालचरिते चारुदत्ते च, तथैव, वाक्य सामान्यं लभामहे । अभिषेकस्थं वालिनः पश्चिमवाक्यं तदेव यद् ऊरुभङ्ग गतदुर्योधनस्य ॥

(५) रूपकेषु हि अमीषु कल्पनासाधारण्यम् अपि दृश्यते । तथाहि—

( क ) अविमारके, चारुदत्ते, अभिषेके दूतवाक्ये च मेघेषु प्रकाश्य विलीनायाः क्षणक्षणायाः प्रभा उपमानत्वेन कल्प्यमाना आलोक्यते ॥

(ख) बालचरिते, दूतवाक्ये, मध्यम व्यायोगे प्रतिज्ञायौगन्धरायणे च राहुमुखग्रस्तेन्दुः उपमानत्वेन उपात्तः ॥

(ग) बालचरिते, दूतवाक्ये, अभिषेके, प्रतिज्ञायौगन्धरायणे च महावीराः ( यथा कृष्णः ) मन्दारगिरिणा उपमीयन्ते ॥

(घ) कार्तिकेयेन क्रौञ्चपर्वतारोहणं बहुत्र आभीक्ष्ण्येन वर्णितम् ।

(ङ ) महाबलभट प्रतिभटयोः बलवान् करिणा बलवत्तरश्च केसरिणा उपमीयते ॥

(च) रिपुकुलः रोषः दवाग्निना तुल्यः आख्यायते ॥

(ङ) उच्चैर्घोषः प्रलये समुद्राद् उत्थितेन निनादेन समीकृतः ।। तथाहि—

शङ्खध्वनिः प्रलयसागरघोषतुल्यः ( कर्णभारे )
यस्य स्वनं प्रलयसागरघोषतुल्यम् ( दूतवाक्ये )

(६) अर्थपुनरावृत्तिरपि क्वचिद् उच्चैस्तरां भासते । तद्यथा—

(क) शपामि सत्येन भयं न जाने ( मध्यमव्यायोगे )
किमेतद् भो भयं नाम भवतोऽद्य मया श्रुतम् ( बालचरिते )

(ख) 'अथवा सर्वमलङ्कारो भवति सुरूपाणाम्' इति वाक्यं बहुत्र प्रयुज्यमानम् अवलोक्यते ।।

(ग) 'वीराणां बाहुबलमेव यथार्थं बलम्' इत्येतादृशोऽर्थोऽपि प्रतिपुनः प्रकाशितः ।।

(७) समानशब्दप्रयोगे समानभंग्या अर्थप्रकाशने च रूपकाणि इमानि बहुधा साम्यं बिभ्रति ।। तथाहि—अस्ति बहुत्र यवनिका शब्दप्रयोगः; अहो अकरुणा खु इस्सरा इति वचोभङ्गिश्च ।।

(८) एषु रूपकेषु समानं रूपकशास्त्रीयकलाकौशलं समानाश्च रूपकीयपरिस्थितयः प्राप्यन्ते । निदर्शनार्थं, स्वप्नवासवदत्तीयः षष्ठोऽङ्कः अभिषेकीयतृतीयाङ्केन तुलाम् आरोपणीयः ।।

(९) प्रायः षट्सु रूपकेषु मुमूर्षुः नरः 'आपस्तावत्' इति अपः ईप्सति ।।

(१०) अत्र रूपकेषु मरणदशावर्णनपराणि स्थलानि प्रायः तुल्यमनोभावमयानि ।।

(११) प्रतीहार्याः विजया इति, कंचुकिनः बादरायणः इति, गोपालयोश्च वृषभदत्तकुम्भदत्तौ इति अमुख्यपात्राणां तानि तानि एव नामानि लभ्यन्ते ।।

(१२) एषां रूपकाणां कतिपयेषु यादवीमातः—शौरसेनीमातः—सुमित्रामातः प्रभृतिषु पदेषु समानः खलु मातृ-नाम-प्रयोगः दृश्यते ।।

(१३) एषां रूपकाणाम् अनेकेषु पाणिनीयव्याकरणविरुद्धप्रयोगाः अपि लभ्यन्ते । तथाहि—आप्रच्छ् इत्यस्य परस्मैपदप्रयोगः, काशिराज्ञे सर्वराज्ञः इत्यत्र नकारान्तस्य राजन् इति शब्दस्य प्रयोगः ।।

(१४) बहुषु च रूपकेषु 'इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः' इति समानं भरतवाक्यम् अवलोक्यते ।।

आभिः युक्तिभिः सिध्यति यत् त्रयोदशापि इमानि रूपकाणि एकस्यैव कर्तुः कृतिः इति । ये च रूपकाणि इमानि 'यशस्विनः' भासमहाकवेः कृतितया नैव स्वीकुर्वन्ति तैःऽपि तेषाम् एककर्तृकत्वम् निस्सङ्कोचम् अङ्गीक्रियते ।।

## (१४) कस्तर्हि कर्ता

अथोऽवतार्यमाणे पद्ये हर्षनृपतेः ( ६०६ तमाद् ख्रीष्टवर्षात् ६४८ तमख्रीष्टवर्षपर्यन्तं कृतभूभोगस्य ) सभापण्डितेन बाणभट्टेन स्वहर्षचरितस्य भूमिकायां[1] भासरूपकाणि तावत् परामृष्टानि—

सूत्रधारकृतारम्भैर् नाटकैर् बहुभूमिकैः।
सपताकैर् यशो लेभे भासो देवकुलैरिव ॥

पद्येऽत्र बाणभट्टेन भासकविनाटकानां गुणविशेषत्वेन दर्श्यमानं सूत्रधारकृतारम्भत्वं बहुभूमिकत्वं[2] सपताकत्वं[3] चेति सर्वम् एषु रूपकेषु दृश्यते ॥

अन्यच्च, ( ख्रीष्टनवमशतकजातेन ) राजशेखरेण 'भासनाटकचक्र'—नाम्ना कोऽपि रूपकवर्गः स्मृतः, उक्तं च यत्— स्वप्नवासवदत्तं नाम भासरूपकविशेषं नाग्नि[4] रपि दग्धुं प्राभवत् ( दृश्यताम्—स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः इति। अनया हि युक्त्या एषां रूपकाणां भासकर्तृकत्वं निश्चीयते। अपरे तु इदम् असहमानाः राजशेखरीयं वक्ष्यमाणं श्लोकजातम् उदाहरन्ति—

कारणं तु कवित्वस्य न सम्पन्नकुलीनता।
धावको[5] ऽपि हि यद् भासः कवीनामग्रिमोऽभवत् ॥
आदौ भासेन रचिता नाटिका प्रियदर्शिका।
तस्य रत्नावली नूनं रत्नमालेव राजते ॥
..............................
नागानन्दं समालोक्य यस्य श्रीहर्षविक्रमः ॥

---

१—कालक्रमस्य ऐतिहासिकेतिवृत्तस्य च दृशा, अथ तस्यां वर्णितानां ग्रन्थानां गुणदोषयोः अपि ज्ञान विशेषः एतस्याःसम्पद्यते, तस्मादपि च भूमिकाया अस्या महत् खलु महत्त्वं वर्तते ॥

२—बहुभूमिकत्वेन अत्र बहुपात्रकत्वं विवक्षितम्। तथाहि; कालिदासस्य शाकुन्तले त्रयोविंशतिः, विक्रमोर्वशीये च केवलम् अष्टादश पात्राणि सन्ति। एषु रूपकेषु च अनुपातेन प्रतिरूपकं त्रिंशत् पात्राणि आयान्ति ॥

३—सपताकत्वेन इह नानारूपकेषु नानाकथानकत्वम् अभिप्रेतम्। कालिदासरूपकेषु तु प्रायः समानं कथानकं पठ्यते ॥

४—अग्निना अत्र गम्भीरसमीक्षा विवक्षिता ॥

५—धावकः=वस्त्रक्षालकः ॥

इदं तु तावत् श्लोकेभ्यः एभ्यः फलितं भवति—(१) यद्वा राजशेखरः भ्रान्तः, (२) अथवा कालिदासपूर्वभवः कालिदासोर्ध्वभवश्चेति द्वौ भासौ अभूताम्।' इति ॥

एवं च सति स्वप्नवासवदत्तेन रूपकेण कालिदासाद् अर्वाक् संभूतस्य भासस्य कृतया भवितव्यम्। पुनश्चैवं, भासधावकशब्दयोः परस्परं विशेष्य-विशेषणभावेन भवितव्यम्। नानासंस्कृतग्रन्थकृद्भिः समर्थ्यमानायां भारतीयानुश्रुतौ तु अनुश्रूयते यत् 'प्रियदर्शिकां रत्नावलीं नागानन्दं च विरच्य धावको नाम कविविशेषः तदानीन्तनात् श्रीहर्षाख्यनृपाद् विपुलं किल धनम् अवाप' इति। वस्तुतस्तु 'भासो नाम लब्धयशाः ; धावको नाम कविविशेषः' इत्येवम् अर्थाप्यमाणे उक्तश्लोके सर्वं साधु उपपद्यते, न च राजशेखरस्य भ्रान्तत्वम् आपतति ॥

केचित्[1] तु 'अद्यत्वे उपलभ्यमानं स्वप्नवासवदत्तं प्राचीनैः ग्रन्थकारैः परामृष्टात् स्वप्नवासवदत्तात् पृथक् अस्ति' इत्यपि प्रवदन्ति। तन्मते हि अधुना भासकृतितया विदितानाम् एषां रूपकाणां कर्ता कोऽपि अनुमानतः खीष्टसप्तमशतकोद्भूतः अज्ञातकुलशीलो दाक्षिणात्यः कविः[2]। प्रोफैसर-सिलवन लेवि महाशयेन गुणचन्द्रोपनामकरामचन्द्रकृतात् नाट्यदर्पणात् पद्यम् एकं प्रदर्शितं यद् इदानीन्तने स्वप्नवासवदत्तस्य संस्करणे नोपलभ्यते[3] ॥

भावार्थस्तु पद्यस्य अस्य अवश्यं तत्र उपलभ्यते। एतावता स्वप्नवासवदत्तस्य नानासंस्करणानि केवलम् अनुमीयन्ते। नहि एतावता प्रचारम् आरूढस्य स्वप्नवासवदत्तस्य अभासकृतत्वं सिध्यति। कालिदासकृतं मालविकाग्निमित्रमेव तावदस्य उदाहरणं भवति। स्वप्नवासवदत्तस्य च अनेकानि संस्करणानि श्री भोजदेवस्य शृंगारप्रकाशे उपन्यस्तात् स्वप्नवासवदत्तीय-पञ्चमाङ्कसंक्षेपादपि उन्नीयन्ते ॥

---

१—अवलोक्यतां सी० आर्० देवधरमहाशयस्य लेखः 'भाण्डारकर–इंस्टिट्यूट–जरनल' नामके १९२५–६ वर्षीय पत्रे ॥

२—प्रोफ़ैसर बरनटमहोदयस्यापि इदम् अभिमतम् ॥

३—पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलासनम्।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥

( ख्रीष्टद्वादशशतकोत्पन्नस्य ) शारदातनयस्य भावप्रकाशे उदाहृतात् स्वप्नवासवदत्तीयात् पद्याद्[1] एकस्माद् अपि अस्य भासकृतत्वं स्पष्टम् । तस्मात् सिद्धं यत्—'सर्वस्य अस्य रूपकवर्गस्य कर्ता भासः आसीद्' इति ॥

[ सूचना—सूक्तिसंग्रहेषु भासनाम्ना उदाहृतानां पद्यानां तु नैकम् अपि एषु रूपकेषु लभ्यते । इत्थं तर्हि संभाव्यते यत् अस्माद् रूपकवर्गात् पृथक् भासः रूपकान्तराणि, पद्यजातं ( विष्णुधर्माख्यम् ) काव्यालङ्कारग्रन्थं च निरमासीत इति । मध्यकालिकसंस्कृतसाहित्यसाक्ष्येण अपि च एतत् मतं पोष्यते ॥

## (१५) भास-शैली

भासस्य रचनायां ओजः प्रसादयोः सविशेषसमावेशः दृश्यते । अन्यच्च, अस्यां महती रसभावादिप्रदीप्तिः, अपूर्वं सङ्गीतलयमाधुर्यं दूरङ्गमा च कविकल्पना अवलोक्यते । मानवहृदयानुभूतिप्रदर्शने च भासो यदि नाम कविकुलगुरुं कालिदासम् अपि अतिवर्तते, यतोहि जगत्प्रकृतिवर्णननिपुणतमः खलु कालिदासः । विषयवैविध्येन ललितमधुरकथावस्तुकत्वेन च भासस्य रूपकाणां विशिष्टं किमपि स्थानमस्ति । भाषासौन्दर्यस्य रमणीय-नाटकीय-परिस्थितेश्च समुत्पादने असामान्यं खलु अस्य कौशलं पश्यामः । अथ श्लोकं कञ्चन खण्डशः विभज्य नानापात्रमुखेन नानाखण्डोद्गारेण अनन्य सदृशः कश्चिरेषः[2] । औपयिकम् अदः नूनं वाकोवाक्यगतस्य वेगस्य सम्वादनिष्ठस्य च चाकचिक्यात्मकचमत्कारस्य अत्यन्तम् अनुगुणायते । गद्य-पद्योभयरचनाचातुरीविचारेण काव्यशैल्याचार्यः भासः प्रतिभाति । काव्यालङ्कारसिद्धान्तशास्त्रिमतेन वैदर्भीरीतिमयी[3] भासस्यकृतिः किल ॥

अपि च, रचनायाम् अस्य अनुष्टुभः प्राधान्यम् अवलोक्यते । एतच्च

---

१—चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥

२—मुद्राराक्षसकर्तुर् विशाखदत्तस्यापि क्वाचित्की प्रवृत्तिरेषा दृश्यते ॥

३—वैदर्भीलक्षण साधकानि तु—
श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
( काव्यादर्शे १।४१॥ )

अस्य प्राचीनत्वस्य साधकं भवति। एतादृशम् एव च अस्य रचनायाः वैशिष्ट्यान्तरम् एतत् यद् पाणिनिव्याकरणविरुद्धप्रयोगाः अपि तत्र प्राप्यन्ते ॥

## (१६) भासस्य कालः

भास-कालम् अधिकृत्य नानाविपश्चितां नाना मतानि सन्ति। कौटिल्यस्य अर्थशास्त्रे प्रतिज्ञायौगन्धरायणात् पद्यम् एकम् उदाहृतम् अवेक्ष्य पण्डित-त० गणपतिशास्त्रिणा 'ख्रीष्टपूर्वचतुर्थशतकभवो भासः' इति तावत् पर्यवसितम्[1]। तर्केऽत्र अर्थशास्त्रस्य ख्रीष्टपूर्वचतुर्थशतकोद्भवत्वं सिद्धं तत्त्वं स्वीकृतं, न च एतद् उपलब्धेतिहाससामग्रीबलेन सहसा समर्थयितुं शक्यम्। रामावतारमहोदयेन तु 'शूद्रककृतस्य मृच्छकटिकस्य कुसंक्षेपमात्रमिव चारुदत्तम्' इति दुर्बलम् आधारम्[2] अवलम्ब्य ख्रीष्टानन्तरद्वादशशतक-

---

१—नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत् तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत ॥

२—मृच्छकटिकचारुदत्तयोः सादृश्यसम्बन्धस्य सुघनिष्ठत्वात् तयोः पृथक् पृथङ्मूलकत्वं तावद् दुर्धरम्। तस्माद् 'द्वयोः अन्यतरद् द्वितीयस्य उपजीव्यं वा स्यात्, आहोस्वित् केनचित् तृतीयेन द्वयोः उपजीव्येन भवितव्यम्' इति उह्येत। आद्ये च पक्षे द्वौ विकल्पौ आयातः—(१) अपूर्णकथावस्तुकं चतुरङ्कमयं चारुदत्तं रङ्गशालार्थं सम्पादितः मृच्छकटिकस्य संक्षेपः इत्येकः, (२) मृच्छकटिकं चारुदत्तस्यैव समुपबृंहितं समुपस्कृतं च रूपम् इति द्वितीयः। प्रथमविकल्पसमर्थने च वक्ष्यमाणा युक्तयः पुरस्क्रियन्ते—

(क) वामनाभिनवगुप्तप्रभृतयश्चिरन्तना आलङ्कारिका यथा मृच्छकटिकस्य विदितत्वं प्रकटयन्तो दृश्यन्ते, न तथा चारुदत्तस्य। 'द्यूतं हि नाम पुरुषस्य सिंहासनं राज्यम्' इति वामनोदाहृतं वाक्यं मृच्छकटिके लभ्यते। श्लेषप्रकरणे च वामनेन 'शूद्रकप्रभृतीनां ग्रन्थेषु अलङ्कारोऽयं बाहुल्येन अवलोक्यते' इति विचारः प्रकाशितः ॥

(ख) असत्पुरुषसेवेवेत्युपमा मृच्छकटिके प्रकरणानुरूपा सुरूपा, चारुदत्ते च अलङ्काराग्रहाद् योजिता अपेशला अवभासते ॥

(ग) चारुदत्ते हि कथावस्तुप्रकाशस्तत्र तत्र मन्दायते, मृच्छकटिकानुशीलनानन्तरं तु सुस्पष्टताम् आयाति ॥

जातत्वं भासस्य कल्पितम्। प्रोफेसर-बरजट-महाशयश्च मत्तविलासेन सह सम्बन्धविशेषम् एषां रूपकाणां निर्वर्ण्य ख्रीष्टसप्तमशतकं भासस्य कालम् आकलयति। स्टेनकोनो-विंटर निट्ज़महाशयौ तु कालिदासाश्वघोषयोः प्राकृतयोः यौ कालौ तदन्तरालवर्ती कोऽपि कालः भासस्य प्राकृतस्य इति सम्प्रधार्य ख्रीष्टानन्तरं द्वितीयचतुर्थशतकयोः मध्ये कदाचिद् भासः उद्बभूव इति तर्कयतः। परं, यथा अत्रैव ग्रन्थे अन्यत्र उक्तं, केवलं प्राकृतं समाश्रित्य

युक्तय एताः परम् आपातरमणीयाः केवलं मन्तव्याः, न तु इष्टार्थसाधिकाः। नहि आभिस्तावद् एतत समाहितं भवति—

(अ) मृच्छकटिकेऽनुपलभ्यमानानि कतिचित् स्थलानि चारुदत्ते लभ्यन्ते। कथमेतत् ?

(आ) उज्जयिन्यां जातस्य राज्योपप्लवस्य नहि कमपि उल्लेखं चारुदत्ते पश्यामः। यदि नाम शूद्रकाद् अर्वाचीनश् चारुदत्तकारोऽभविष्यत् सोऽवश्यम् एतां महतीं राज्यघटनां कथानकानुस्यूताम् अकरिष्यत ॥

केचिद् तु द्वयोः रूपकयोरन्योन्यसादृश्यांशान् उपेक्ष्य अन्योन्यभेदांशान् उपादाय किंचित् फलम् अवाप्तुम् अयतन्त। मुख्यभेदश्च द्वयोः (क) नाट्य कलागतः, (ख) प्राकृतगतः, (ग) पद्यरचनागतः, (घ) रूपकीयेतिवृत्तगतश्च अनुसंहितः। तत्र,

(क) नाट्यकलागतोभेदः। भेदश्चायं द्विरूपोऽवलोक्यते। (१) चारुदत्तस्य उभयोः कोशयोः ( M S S. ) नान्दी नोपलभ्यते, (२) स्थापनायां च कर्तृ-नामधेयं न अधीयते। मृच्छकटिके तु नान्दी च कर्तृनामधेयं चेत्युभयम् उपलभ्यते। परं तर्केण एतेन न हि सन्देहः सर्वथा निवर्तते ॥

(ख) प्राकृतगतो भेदः—प्राकृतांशानां तुलनात्मकाध्ययनम् अपि नैकान्ततः प्रयोजकं भवति, यतो हि चारुदत्तस्य कोशः दक्षिणापथे हस्तङ्गतः, तेन हि तत्र यत् प्राकृतस्य प्राचीनरूपदर्शनं तदपि न विस्मयावहम् ॥

(ग) पद्यरचनागतोभेदः—उभयोः पद्यानां तुलनात्मकानुशीलनेन मृच्छकटि-कपद्यानाम् उत्कृष्टत्वं स्पष्टम्। तथाहि—

(अ) चारुदत्ते—यथान्धकारादिव दीपदर्शनम् (इवयथाशब्दयोः पुनरुक्तिः)। मृच्छकटिके—घनान्धकारादिव दीपदर्शनम्।

(आ) चारुदत्ते—यो याति दशां दरिद्रताम् ( एकं भाववचनं भाववचनान्तरं विशिनष्टि ) मृच्छकटिके—यो याति नरो दरिद्रताम्।

कवेः कालस्य निर्णयः कर्तुं न शक्यः । किं कारणं ? भासस्य रूपकाणां दक्षिणापथे अश्वघोषस्य च रूपकस्य बाह्लीकेषु ( Central Asia ) उपलब्धेः । भासरूपकाणां स्वयंसाक्षिरूपाणि तु कतिपयानि तथ्यानि विशेषेण विचारारोप्याणि सन्ति ।

(१) एषु रूपकेषु भरतवाक्यस्य आदिमावस्थारूपम् अवलोक्यते ।

(२) अवगुण्ठनार्थे यवनिकापदप्रयोगो दृश्यते, न तु रंगभूम्यपसारपटव्यवधानार्थे ॥

(३) अभिनवाङ्केन देशपरिवृत्तिः संसूच्यते, न च रङ्गवचनेषु ( Stage directions ) क्वचिद् देशज्ञानविषयकं वचनं किमपि श्रूयते ।

(४) ख्रीष्ट-द्वितीयशतकोत्कीर्णेषु रुद्रदाम-शिलालेखेषु दृश्यमाना कृत्रिमा काव्यशैली रूपकेषु एषु न दृश्यते । एषु, पुनः, प्राचीनाः व्याकरण-प्रयोगाः प्राप्यन्ते, अनुप्रासाः दीर्घसमासाश्च क्वचिदेव ।

(५) एषु च उदाहरिष्यमाणसदृशाः प्राचीनप्रयोगाः लभ्यन्ते—

---

(इ) चारुदत्ते—तिलकखर्जूरपाण्डु ( अक्लिष्टा रम्या च चन्द्रोपमा )।
मृच्छकटिके—कामिनीगण्डपाण्डु (परिष्कृता रसस्निग्धान्तानुकूला च सैवोपमा)।
तस्मात् 'मृच्छकटिकं चारुदत्तानन्तरं खलु व्यरच्यत' इति तावत् स्पष्टम् । अन्यथा, चारुदत्तस्य अपरिष्कृतरचनानिमित्तं चिन्त्यम् ॥

(व) रूपकीयेतिवृत्तगतो भेदः—रूपकीयेतिवृत्तगतेन भेदेन च पूर्वोक्तम् अनुमानं पुष्टिम् आप्नोति ; मृच्छकटिकस्य हि कथावस्तु निर्माणे चारुदत्तकथावस्तुतः उच्चैस्तरां प्रकृष्टम् । इदं तु अत्र विशिष्य अवधेयं यत् चारुदत्ते दृश्यमाना व्याघातदोषा मृच्छकटिके अपसारिता इव खलु विभाव्यन्ते । तद्यथा चारुदत्ते पञ्चम्यां तिथौ सायं चिरेण चन्द्रोदयः इति उक्त्वा दिनद्वयानन्तरम् अष्टम्यां पुनः निशीथे चन्द्रोदयः उक्तः । स्खलनम् इदं मृच्छकटिके शोधितं दृश्यते । तत् को नाम प्रतीयात् यद् रङ्गशालार्थं मृच्छकटिकं संक्षिपता कविना यथार्थं वस्तुतत्त्वम् अभिप्रेत्य ननु अयथार्थतां नीतम् इति ॥

तर्हि, 'मृच्छकटिकं चारुदत्तस्य समुपबृंहितं समुपस्कृतं च रूपम्' इत्येव अवसेयम् । कस्मात् तु इत्थं जातं, चारुदत्तस्य अपूर्णत्वाद् वा काव्यार्थचौर्याद् वा इति तु सनिश्चयं वक्तुम् अशक्यम् ॥

यदि च भविष्यद्भिः अनुसन्धानप्रयत्नैः चारुदत्तस्य मृच्छकटिकापेक्षया प्राचीनत्वं मौलिकत्वं च खण्डितं स्यात्, तदपि एवं वक्तव्यं स्याद् यद् मृच्छकटिकोपजीव्यस्य ग्रन्थस्य भूयान् मौलिकोंऽशश्चारुदत्ते सुरक्षितोऽस्तीति ॥

(अ) यथा अशोकस्य सिद्धपुर-शिलालेखे, तथा इह आर्यपुत्रशब्दः नृपार्थे प्रयुक्तः।

(आ) महाब्राह्मणशब्दः आदरार्थे प्रयुक्तः, न च और्ध्वदेहिकश्राद्धाचार्यार्थे।

(इ) यथा प्राचीन बौद्धवाङ्मये, तथा इह यक्षिणीशब्दः पिशाच्यर्थे प्रयुक्तः।

(ई) भरत (अभिनेतृ) वंशः अनूचानवंशतया आख्यातः। तथाहि, 'वेदाक्षरसमवायप्रविष्टो भारतो वंशः' (प्र० यौ०)

(६) जातककथासु इव इहापि कथाप्रारम्भः प्रायः 'आसीत् काम्पिल्ये ब्रह्मदत्तो नाम नृपः' इत्यादिकेन वाक्येन दृश्यते।

(७) पञ्चरात्रस्य[1] कथानकं सम्प्रति प्रचलिते महाभारते नोपलभ्यते।

(८) रूपकैश्च एभिः सा सामाजिकी दशा निरूप्यते यस्यां सनातन-हिन्दुभिः ते ते बौद्धसम्प्रदायाः परिगृहीताः अभूवन्। उदाहरणार्थं, प्रतिज्ञायौगन्धरायणे श्रमणकस्य चारित्र्यं विलोकनीयम्। क्वचित् क्वचिद् बौद्ध-सम्प्रदायविरोधोऽपि रूपकैः एभिः प्रकाश्यते[2]॥

(९) इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥

इत्यत्र यादृशं साम्राज्यं संकेतितं तादृशं ख्रीष्टपूर्वं ३२५—तमवर्षाद् आरभ्य १००—तमवर्षपर्यन्तं किल आसीत्॥

(१०) पाणिनिविरुद्धप्रयोगैः अनुष्टुभा छन्दसा च एषां रूपकाणां सुप्राचीनत्वं सुलक्ष्यम्। तदेष सर्वोऽपि तर्कः 'ख्रीष्टपूर्वं चतुर्थशतकं भासस्य कालः' इति यत् न० गणपतिशास्त्रिणा उत्प्रेक्षितं, तदेव दृढीकरोति। सा एषा परा सीमा भासकालस्य॥

अथ अपरकालसीमनिर्धारणे तु एतत् न विस्मर्तव्यं यद् रूपकाणि इमानि कालिदासीयमालविकाग्निमित्रात् कौटिल्यार्थशास्त्राच्च पूर्वं प्रादुर्भूतानि। कालिदासकालश्च यावदद्य अनिर्णीतचरः। कौटिल्यार्थशास्त्रस्य च कालस्य अपरा सीमा तु विद्वद्भिः ख्रीष्टानन्तरं द्वितीयं शतकं प्रायेण निश्चीयते। तस्माद्, एतयोः कालसीम्नोः अन्तराले कदाचित् भासेन गृहीतजन्मना भवितव्यम्॥

---

१—पञ्चरात्रे हि दुर्योधनः 'पञ्चरात्रे यदि पाण्डवा विज्ञाता भवन्ति, राज्येऽर्धहरा मया ते कर्तव्या' इति दत्तवचनो विलोक्यते। अथ दुर्योधनपक्षे युध्यमानोऽभिमन्युर् विराटसैन्येन निगृहीत इत्यपि पठ्यतेऽत्र।

२—बौद्धसम्प्रदायविरोधिनां ब्राह्मणवंश्यानां शुङ्गानां कण्वानां च नृपतीनां साम्राज्ये काल एतादृश आसीत्।

## (१७) ख्रीष्टपूर्वप्रथमशतके संस्कृतपुनरुज्जीवनम् ।

अथ बुद्धशासनवर्तिनः संस्कृतमहाकविः बौद्धमहायानसम्प्रदायानुयायी अश्वघोषः ( ख्रीष्टाब्दानां प्रथमशतकजातस्य ) महाराजकनिष्कस्य समकालिकः आसीत् । तेन च पालीभाषानिबद्धेषु कतिपयबौद्धसम्प्रदायग्रन्थेषु संस्कृतभाषामय्यः टीकाः कृताः । बौद्धसम्प्रदायानुयायिनाऽपि आचार्यविशेषेण स्वसम्प्रदायप्रचारहेतोः संस्कृते ग्रन्थाः निर्मिता इति यत्, तेन 'ख्रीष्टाब्दप्रचारपूर्वम् एव संस्कृतेन पुनरुच्छ्वसितं बभूवे' इति फलितं भवति । 'अशोकशासनानन्तरमेव सम्प्रदायानपरम्परायां हिन्दुधर्मेऽपि दुर्निवारः कोऽपि महान् सामाजिकः परिवर्तः संवृत्तः' इति तावत् संभाव्यते । तदा हि नूनं शुङ्ग-कण्व-प्रभृतयः हिन्दुराजवंशाः ख्यातिम् अथान्यधर्मावलम्बिनाम् अपि लोकबहुमतताम् अवापुः, अभूवंश्च तक्षशिलाविद्यापीठे लब्धविद्याः विद्याव्रतस्नातकाः भारते वर्षे सर्वत्र प्रतिष्ठाभाजः । इदमपि च श्रूयते यत् 'पुष्यमित्रो नाम नृपः ख्रीष्टपूर्वद्वितीयशताब्द्यां मध्यभारते अश्वमेधेन इयाज' इति । एतर्हि च काले व्याकरणमहाभाष्यप्रणेता पतञ्जलिः स्वजन्मना भुवम् इमाम् अलञ्चकार । तस्य च महाभाष्ये तदा रचितानां नानाग्रन्थान्तराणां नामानि अधीमहे । अस्मिन्नेव काले महाभारतस्य नवतरश्लोकोपचयेन संवर्धनं, श्लोकबद्ध-मनुयाज्ञवल्क्यस्मृत्यादिग्रन्थानां च बहूनां पुराणानां च प्रणयनं सम्पन्नम् । तस्माद् अनुमीयते यत् 'ख्रीष्टपूर्वं कालोऽयं संस्कृतसाहित्येतिहासस्य परमसमृद्धं युगं खल्वासीत्' इति । अस्यैव प्रतापोऽयं यत् 'ततः प्रभृति शिलालेखेषु[1] जैनसाहित्येऽपि च संस्कृतस्य प्रयोगः आरभ्यत' इति । ख्रीष्टपूर्वं सप्तपंचाशत्तमे वर्षे वैक्रमसंवत्सरः[2] प्रचारम् आरूढः । तेनापि नूनं कस्यचित् महतः हिन्दुभूभुजः कीर्तिम् अचलांकर्तुं वा कस्यचित् गौरवशालिनः हिन्दुविजयस्य तिथिम् अविस्मार्यां विधातुं वा लोकपरिगृहीतेन भवितव्यम् । कालिदासोऽपि[3] ख्रीष्टपूर्वं प्रथमशतके बभूव इति चापि पारोक्ष्यविद्भ्यः अनुशृणुमः ॥

---

१—( ख्रीष्टस्य पञ्चाशदुत्तरशततमे वर्षे ) द्वासप्ततितमे शाके उत्कीर्णः रुद्रदाम्नः शिलालेखः संस्कृते आद्यः शिलालेखो नास्ति । अस्य भाषया शैल्या च काऽपि महोन्नत्यवस्था संस्कृतस्य तदानीन्तनी अवगम्यते ।

२—ततः प्राचीनेषु शिलालेखेषु ख्रीष्टपूर्वं सप्तपञ्चाशत्तमे वर्षे दत्तः संवत्सरः कृतसंवत्सरनाम्ना व्यपदिष्टः ।

३—कालिदासस्य कालम् अधिकृत्य एकविंशतितमे खण्डे विस्तरेण वक्ष्यते ॥

## (१८) कालिदासः ।

कालिदासः सर्वसंस्कृत कवीनाम् अग्रणीः इति सर्वैः अभ्युपगम्यते । सत्यमेव च स भारतीय शेक्सपियरः इत्याख्याते । भारतीयाः पण्डिताः आलङ्कारिकाश्च एनं महाकवि-कविशिरोमणि-कविकुलगुरु-प्रभृतिभिः उपपदैः स्मरन्ति । अहो बत एतादृशस्य अस्य महाकवेः कालम् इतिवृत्तं च अधिकृत्य न किमपि परमार्थेन विदितम् अस्माकम्[1] तस्य परावरकालसीम्नोः केषांचिद् मतेन एकशतकस्य, अपरेषां शतकद्वयस्य, अन्येषां तु शतकपञ्चकस्यापि अन्तरं दृश्यते । तस्य समये निरूढिम् आरूढेषु व्याकरणसाहित्य कामसूत्रादिषु धर्मशास्त्रदर्शन-राजनय-ज्योतिषादिषु च सर्वेषु शास्त्रेषु कृतश्रमः खल्वसौ आसीत् ॥

महाकाव्य-गीतिकाव्य-रूपकैस्त्रिविधकाव्यस्य कर्ता कालिदासः आसीत् । तत्कृतितया प्रतीतेषु नानाप्रबन्धेषु वक्ष्यमाणाः प्रबन्धाः विशिष्य अनुशीलनीयाः सन्ति ।

(१) मालविकाग्निमित्रम् ।
(२) विक्रमोर्वशीयम् ।
(३) अभिज्ञानशकुन्तलम् ।
} रूपकाणि

(४) ऋतुसंहारम् ।
(५) मेघदूतम् ।
} गीतिकाव्ये

(६) कुमारसंभवम् ( प्रथमाष्टसर्गाः )
(७) रघुवंशम् ।
} महाकाव्ये

### (१) मालविकाग्निमित्रम्

विल्सनमहोदयः रूपकस्य अस्य कालिदासकृतत्वे संदिदेह । परं विल्सनानन्तरं जातेभ्यः शोधानुशोधेभ्यः अस्य कालिदासरचितत्वं निर्विकल्पं निश्चीयते । मालविकाग्निमित्रस्य कोश (MSS) साक्ष्यं, प्रस्तावनायां प्रतिपादिताः अर्थाः, आन्तरिक साक्ष्यं ( यथा रम्याः उपमाः ), पात्रचारित्र्य-चित्रणं ( पात्राणां प्रत्येकं कालिदासरीत्या प्रातिस्विकं चारित्र्यं स्पष्टं बिभ्रत्

१—द्वे तच्चरितकथे सुप्रसिद्धे । एका, यस्यां तस्य महामूर्खस्य देव्याः सकाशाद् वरप्राप्तिः श्रूयते; अपरा यस्यां लङ्काद्वीपे कयाचिद् धनलोलुपदूत्या कृतस्तद्-वधोपायश्च श्रूयते । न च द्वाभ्यामपि कथाभ्याम् ऐतिहासिकं तथ्यं किमपि लभ्यते ॥

दृश्यते ¹, नाट्यकलोत्कर्षः (अत्र हि रूपके साधारणकथाम् उपादाय रमणीयं किमपि कथानकं प्रकल्पितं विलोक्यते ) । शैली, भाषा इत्यादि बहुतरम् एतद् रूपकस्य कालिदासकृतत्वस्य इदम् अनुमापकं पश्यामः । कालिदासस्य रूपकेषु प्रथमा कृतिः इदम् इत्यत्र न कोऽपि सन्देहः । प्रस्तावनायां तेन हि 'भास-सौमिल्ल-कविपुत्रादिप्रसिद्धकवीनां नाटकेषु सत्सु विद्वत्-परिषदि अस्य समादरो भविष्यति' इत्यत्र स्फुटं सन्देहः प्रकटीकृतः । पञ्चभिः अंकैः निबद्धे रूपकेऽत्र विदिशाधिपतेः अग्निमित्रस्य विदर्भराजकुमार्याः मालविकायाश्च प्रणयकथा अन्ततोगत्वा परिणयश्च प्रादर्शि । प्रसङ्गानुरोधेन इह अग्निमित्रजनकेन पुष्यमित्रेण राजधानीं प्रेषिता पुष्यमित्रमुक्तम् अश्वमेधाश्वं रक्षता अग्निमित्रपुत्रेण वसुमित्रेण सिन्धूनदतटे यवनोपरि लब्धस्य विजयस्य वार्ताऽपि वर्ण्यते ॥

## (२) विक्रमोर्वशीयम् ।

अग्निमित्रोत्तरं शकुन्तलापूर्वं च कालिदासेन विक्रमोर्वशीयं नाम रूपकं रचितम् । पञ्चसु अंकेषु इह नृपपुरूरवसः उर्वश्यप्सरसश्च परस्परानुरागो वर्णितः । 'केशिना दैत्येन पीड्यमाना उर्वशी अतुलबलवीर्येण महाराजपुरुरवसा त्रायते । आपृच्छ्य गच्छन्तौ तु तौ मिथोऽनुरक्तौ भवतः' । इति प्रथमाङ्कस्य । विदूषकं प्रति स्वप्रेम्णः कथां कुर्वाणे नृपपुरुरवसि स्वसख्या समम् अदृश्यमानतया तत्रोपस्थिता उर्वशी नृपति-तदासक्तिं निशम्य निशम्य च भूर्जत्वचाम् आरोपितानि स्वानुरागाक्षराणि तत्पुरः पातयति । अथ उर्वशी पुरुरवा च परस्परं कथां कुरुतः, किन्तु अचिरादेव सा कस्मिंश्चिद् नाटके अभिनयार्थम् अपेक्षिता इन्द्रेण स्वर्गम् आहूयते । उर्वशीपातित प्रेमपत्रं तु नृपेण विदूषकाय समर्पित तदनवधानेन तद्धस्तान् क्वचित् च्युतं महादेवीहस्तं प्राप्नोति येन सा भृशं रिष्यति, नृपेण अनुनीयमानाऽपि च प्रसादं नाधिगच्छति । इति द्वितीयाङ्कस्य । अथ "पुरुरवसि अनुरक्ता उर्वशी कुत्रचिद् नाटकाभिनयान्तरे पुरुषोत्तमेतिवक्तव्ये पुरुरव इत्युच्चारणापराधाद् भरतेन 'भुवं गच्छ' इति शप्ता बभूव, इन्द्रप्रार्थनया तु 'पुरुरवसा जनितं सुतं प्रसूय पुनः देवलोकम् आगमिष्यसि' इति शिथिलीकृतशापा च आसीत्" दिव्यैतिह्यं सूचयित्वा महादेव्याः कोपशमः वर्णितः । ततश्च सा नृपम् उर्वशीं परिणेतुम् अनुजानाति, लोचनगोचरम् अनायान्ती च उर्वशी तयोः वार्तालापं शृणोति, महादेव्यां गतायां च राज्ञः पुरः आविर्भवति । इति तृतीयाङ्कस्य । अथ नृपाय प्रणये कुपिता उर्वशी निषिद्धस्त्रीप्रवेशां कार्तिकेयवनीं प्रविष्टा

लतारूपेण परिणता भवति । तद्विरहे विस्मृतात्मभावः भूपः वने इतस्ततः ताम् अन्विष्यन् मेघं, मयूरं, मधुपं, परभृतकं वारणं, हरिणं, स्रोतस्विनीं च तां पृच्छति । अन्ते आकाशभाषया प्रबोधितः स तादृशं रत्नं संप्राप्नोति यत्प्रभावेण तदाश्लेषे तत्स्पर्शम् अवाप्य लतारूपा उर्वशी स्वपूर्वभावं लभते । इति चतुर्थाङ्कस्य । अथ परममुदितं प्रणयि युगलं राजधानीं प्रत्यागच्छति । नचिरादेव तु दिव्यं रत्नं गृध्रेण केनचिद् अपहृतम् । गृध्रोऽपि च स एकदा 'पुरूरवसः पुत्र आयुः' इति नामाङ्कितेन बाणेन व्यापादितोऽभूत् । ततोऽचिरादेव तपोवनात् स्त्री काचित् कंचन क्षत्रियकुमारं आदाय महाराजभवनं प्रविश्य 'तपोवननियमभङ्गकारी शिशुरेष न तत्र निवासम् अर्हति इदानीम् । तस्मात् त्वयाऽयं प्रतिग्रहणीयः' इति उर्वशीम् अवोचत् । राज्ञस्तु न किमपि आत्मनः पुत्रस्य तस्य विदितम् आसीत्, अथापि एनं दृष्ट्वा महान् अस्य हर्षः समुपजायते । उर्वशी तु भाविनं नृपेण आत्मनो वियोगं चिन्तयन्ती भृशं मनोव्यथाम् अनुभवति । अथ विदितसर्ववृत्तान्तस्य भूपतेरपि मनसि महद् दुःखं भवति । दिष्ट्या सुखसंवादम् आदाय नारदः स्वर्गात् तत्र अवतीर्य राज्ञः विज्ञापयति यत् दैत्यैः सह युध्यमानो देवराट् साहाय्यार्थं भवन्तं स्वर्गलोकम् आगन्तुं प्रार्थयति यावज्जीवं च भवता उर्वश्या सह संयोगम् अनुमन्यते । इति पञ्चमाङ्कस्य कथासारः ॥

## (३) अभिज्ञानशकुन्तलम् ।

रूपकम् इदं कालिदासस्य प्रौढे वयसि विरचिता श्रेष्ठाकृतिरस्ति । गेटेः ( Goethe ) हि एतत् नितरां तुष्टाव । तस्य हृदये च अस्य यो महान् प्रभावः पतितः तत्प्रतिबिम्बः फाउस्ट ( Faust ) नाम्न्याः तज्जगत्प्रथितायाः कृतेः भूमिकायां स्पष्टं सुलक्षः । रूपकेऽत्र सप्त अङ्काः सन्ति । आद्ये हि अंके दुष्यन्तो नाम नृपः मृगयारसेन यं मृगम् अनुधावति स महर्षेः कण्वस्य तपोवनं प्रविशति । तम् अनुसरन् नृपः आश्रमपरिसरे रथाद् अवरुह्य महर्षिं नन्तुकामः आश्रमपदं प्रविशति । तत्र तु महर्षेः असन्निहिततया तेन सुतानिर्विशेषं पालिता शकुन्तला नाम काचित् कन्या आश्रमसंरक्षणे तत्स्थानापन्ना वर्तते । दैवात् तत्क्षणे भ्रमरेण बाध्यमाना सा अनसूया प्रियंवदानाम्न्यौ स्वसख्यौ यदा आकारयति तदा ते 'सकलस्यापि लोकस्य त्राता महाराजो दुष्यन्तस्त्वां रक्षिष्यति' इति सपरिहासं प्रतिवक्तः । अथ झटिति दुष्यन्तः तां त्रातुं पुरः प्रतिष्ठते । 'मेनकाविश्वामित्रयोः आत्मजा खलु सा' इति तु तत्सखीभ्यां ज्ञात्वा 'न सर्वथा मम पाणिग्रहणस्य अयोग्या

एषा' इति मनसि निश्चित्य यावत् नृपः तस्यै स्पृहयते तावत् साऽपि तस्मिन् अनुरज्यते। अथ एतस्मिन्नेव अन्तरे आश्रमं प्रविष्टात् हस्तिनः भीतानां तपस्विनाम् आक्रन्दम् आकर्ण्य नृपः तं दुष्टवारणम् ततः निष्कासति। इति प्रथमाङ्कस्य। अथ शकुन्तलागतात्मा आत्मनि नृपः विदूषकस्य निन्दा-पयान्, रक्षोभ्यः तपोवनरक्षार्थं कण्वाश्रमं प्रतिगच्छति, राजधानीतः कार्य-विशेषानुरोधेन द्रुतं तत्र आगमनाय सन्देशं च प्राप्य विदूषकं स्वप्रतिनिधित्वेन प्रेषयति न च स्वयं गच्छति, गच्छन्तञ्च विदूषकस्य कथयति, 'शकुन्तला विषयकं यत् मया ते कथितं परिहासेनैव तत् सर्वम् उक्तं वेदनीयं न तु परमार्थेन' इति। इति द्वितीयाङ्कस्य। अथ विरहव्यथया भृशं पीड्यमाना शकुन्तला स्वसखीप्रार्थनाम् अनुरुध्य दुष्यन्ताय प्रेमाक्षराणि लिखति, निभृतं तत्संलापं शुश्रुवान् असौ च द्रागेव तत्पुरः समागच्छति। ततः शकुन्तला दुष्यन्तौ स्वैरं गोष्ठीसुखम् अनुभवन्तौ चिरं तत्र तिष्ठतः, गौतम्यां च तत्र आगतायां स अनुपलक्षितः ततः अपसरति। इति तृतीयाङ्कस्य। अथ नृपे राजधानीं प्रतिनिवृत्ते तद्विरहविधुरा शकुन्तला एकदा यदा उन्मनायमाना उटजान्तरम् अध्यतिष्ठत् तदा दुर्वासा नाम महाकोपनो मुनिः द्वारम् उपेत्य भिक्षाम् अयाचत, शकुन्तलायां तद्वचनम् अशृण्वन्त्यां च अञ्जसा तस्याः शापम् अदात्; परं तत्सखीभ्याम् अनुनीतस्तु 'स्वदत्तम् अभिज्ञानम् अनया प्रदर्शितं वीक्ष्य अस्याः वल्लभः एनां स्मरिष्यति' इत्येवं तं शापं यतिरूपि शिथिलीचकार। अथ योगबलेन शकुन्तलादुष्यन्तयोः जातं गान्धर्वं विवाहं सर्वथा विज्ञाय महर्षिः कण्वः गौतम्या स्वशिष्याभ्यां च सह तां तत्पतिसकाशं प्रहेतुं निश्चिनोति, तत्प्रस्थानवेलायां च साधारणगृहस्थनिर्वि-शेषं सुतावियोगदुःखम् अनुभवति। ततःक्लिष्टकायं वृद्धं पितरं कण्वं, अनसूया-प्रियम्वदे प्रियसख्यौ, सस्नेहं स्वकरपालितं तपोवनस्य पशु-पक्षि-तरु-वीरुधं च एकपदे मुञ्चन्ती शकुन्तला अपि गुर्वीं मनोवेदनाम् अनुभवति। सर्वाङ्करसातिशायी इह करुणो रसः। प्रौढेः परां काष्ठां प्राप्ता च कालिदासस्य नाट्य-काव्य-कला अत्र अवलोक्यते। इति चतुर्थाङ्कस्य। अथ सर्वथाविस्मृत-शकुन्तलः दुष्यन्तः एकदा यदा राज्यकार्यचिन्तापर्याकुलः धर्मासनम् आरूढः आसीत्, तदा द्वारपालेन केषाञ्चित् तपस्विनाम् आगमः तस्मै निवेदितः। अथ शकुन्तलायां सभाम् उपागतायाम् अपि दुर्वासः शापप्रभावेण दुष्यन्तो न तां प्रत्यभ्यजानात्, गौतम्या मुनिभ्यां च बहुतरं कृतप्रबोधोऽपि न तां स्वीकर्तुम् उत्सहते। गत्यन्तराभावात् शकुन्तलासहागामिनः ताम् अजिघृक्ष-

ततोऽपि तत्पतेः गृहे तां परित्यज्य तपोवनं प्रतिगन्तुं प्रस्तुताः भवन्ति। तस्मिन्नेव तु क्षणे मानवीरूपेण किमपि दिव्यज्योतिः (मेनका) तत्रागत्य सर्वेषां साश्चर्यं पश्यतां शकुन्तलाम् आदाय गच्छति। इति पञ्चमाङ्कस्य। अथ दुष्यन्तेन तपोवने शकुन्तलायै अभिज्ञानतया यदंगुलीयकं प्रत्तम् अभवत् तदेव धारयन् कोऽपि धीवरः राजधान्यां रक्षिभिः अवलोक्यते निगृह्यते च। अंगुलीयकं च तद् दृष्ट्वा नृपः शकुन्तलया सह स्वप्रेमकथां स्मरति आत्मकृतं शकुन्तलाप्रत्याख्यानं च अनुसन्धाय भृशं परितप्यते, तस्य निरपत्यतादुःखेन च तस्य दुःखम् इदं पुनरधिकं वर्धते। दिष्ट्या कतिपयदिनानन्तरमेव दैत्यदलने साहाय्यार्थम् इन्द्रेण स स्वर्गे आहूयते। इति षष्ठाङ्कस्य। अथ नाके दैत्यविजयानन्तरं भुवम् आनीयमानस्य तस्य मातलिर्नाम इन्द्रसारथिः नाना रमणीयस्थानानि तानि तानि दर्शयति, यत्प्रसङ्गात् स महर्षेः मारीचस्य तपोवनम् आगतः तत्र शिशुम् एकं सिंहकिशोरकेण सह मनोविनोदयन्तं पश्यति, नचिरात् च 'स तस्यैव आत्मनः सुतः' इति अधिगच्छति। ततः तपोवनवासिवेषे दधाना शकुन्तला अपि तत्रायाति, ससुतौ च द्वौ महर्षिं मारीचं उपतिष्ठेते, तदनुमत्या च शकुन्तलाम् पुत्रं च आदाय नृपः सहर्षं राजधानीं प्रत्यागच्छति। इति सप्तमाङ्कस्य कथासंक्षेपः॥

## (४) ऋतुसंहारम्।

ऋतुसंहारं नाम गीतिकाव्यं कालिदासेन उद्यत्तारुण्यकाले कदाचिद् विरचितम् इति प्रतीयते ग्रीष्मम् आरभ्य वसन्तपर्यन्तं षडपि ऋतवोऽत्र तरुणप्रणयदृशा वर्णिताः। तथाहि ग्रीष्मे प्रखरतेजोभिः दिवसैः पीडितः युवलोकः रात्रिषु एव निर्वृतिं लभते यदा सुन्दरी सुन्दरमुखच्छविभिः निर्जितलक्ष्मीकः चन्द्रोऽपि ताभ्यः द्रुह्यति, प्रोषिताश्च तरुणाः स्वतरुणीविरहं सोढुं न पारयन्ति। प्रावृषि तावद् मेघाः शनैः शनैः आकाशं निबिडम् आच्छादयन्ति, अधोऽधोविलम्बिनश्च ते गिरिभूमीः चुम्बितुकामाः इव आलोक्यन्ते। इदानीं च काले कामिषु कामः कृतजीवनरससेकः इव जलदैर्भवति। शरत् संयुक्तानां कामिनीनां तु अद्भुतः कोऽपि सुखसंभोगकालो भवति, वियुक्तानां तु हिमाहतानां प्रियंगुलतानाम् इव परितापकर एव भवति। अथ क्रमेण सर्वान्ते वर्णिते वसन्ते पञ्चशरशरायमाणाः चूततरुमञ्जर्यः युवतीजन हृदयानि विध्यन्ति॥

इह नानावृत्तमयैः १५३ मितैः पद्यैः सर्वैः एकैकस्मिन् सर्गे एकैकः ऋतुः उपवर्णितः। कालिदासस्य अस्यां प्रारम्भिककृतौ अपि तस्य महतीपर्यवेक्षण-

शक्तिः प्रसादगुणेन वर्णनचातुरी च परमा आलोक्यते। तदुक्तं मैक्डानल-महोदयेन (A History of Sanskrit Literature P. 337) 'तस्य प्रकृत्या सह समवेदना, सूक्ष्मा पर्यवेक्षणस्य ईक्षिका, भारतीय प्राकृतिक दृश्यानां च विशदवर्णन चातुरी यथा काव्येन अनेन स्फुटीक्रियते यदिनाऽन्न तद्ग्रन्थान्तरेण केनचिद्' इति। तथा च ए. बी. कीथमहाशयोऽपि 'यद्यपि प्रसादगुणोऽस्य काव्यस्य संस्कृतसाहित्य शास्त्रिणां नाम हृदयावर्जको न भवति, तथापि स एव तु आधुनिककाव्यमर्मज्ञानां चेतश्चमत्कार-कारके महान् हेतुः' इति काव्यमिदम् उपनौति (A History of Sanskrit Literature, P. 84).

## (५) मेघदूतम्

असंशयम् एतद्धि कालिदासस्य प्रौढं गीतिकाव्यम्। कदाचित् स्वभर्तुः कुबेरस्य सेवायाम् अपराद्धः कश्चिद् यक्षः स्वामिना वर्षं यावत् स्वदेशाद् निर्वासितः सन् रामगिरिम् अधिवसति। अथ प्रावृण्मुखे मेघं कंचन उत्तरां दिशम् उच्चलितम् उदीक्ष्य स तन्मुखेन स्वप्रेयस्यै सुखसन्देशं दित्सति। चाटुपुरस्सरं मेघं सम्बोध्य तत्प्रोत्साहनार्थं प्रथमं स पथां रामणीयकं वर्णयति येन तद्विवक्षितः पथां क्रमः ज्ञायते। स आह—सखे! पुर आम्रकूटपर्वतं गत्वा तत्रत्यान् दावान् वृष्टिभिः शमयन् विन्ध्यतलवाहिनीं नर्मदावाहिनीम् उपेयाः। ततस्तु वेत्रवतीम् अनु स्थितां विदिशां नाम पुरीम् उपरि उपरि उड्डीय वामेन प्रवर्तमानः सन् श्रीविशालां विशालाम् (उज्जयिनीं) जिहीरव। तदनु कुरुक्षेत्रं प्रपद्य त्वया तत्र सारस्वतीकाः पुण्या मधुराश्च आपः पीयन्ताम्। अथ कनखलं प्राप्य कैलासं मानसं च प्रतिष्ठस्व मानसे च सरोवरे तत्सलिलैः विश्रान्तिं व्यपनोद्य अलकाम् उपढौकस्व, इति। अथ मेघस्य परिचयसौकर्यार्थं यक्षः अलकायां तत्प्राणानां या वसतिः तां विविच्य तस्या वर्णयति, तदनन्तरं च प्रार्थयति—'भद्र! मन्दीकृततडित्-प्रकाशेन मृदूकृतस्तनितनिर्घोषेण च त्वया मद्गृहा उपगन्तव्याः। मा नाम प्रिया मे स्वप्ने माम् अनुध्यायन्ती विघ्नितमनोरथा भवेत्। बत विप्रयोग-सन्तापविच्छायचन्द्राननया क्षीणाङ्गलतया च तया भवितव्यम्। अथ तस्यां प्रबुद्धायां भवान् अनुरागसन्देशं मामकम् इमं तस्यै उपहर, अचिराद्भाविनं च आवयोः संयोगं संसूच्य तां संसान्त्वय'। इति॥

वाल्मीकिरामायणे सीताविरहकातरं ज्येष्ठं दाशरथिं वर्षावर्णनं च वीक्ष्य तत्साम्यं दूरं विलम्बयन्तः केचित् कल्पयन्ति यद् 'मेघदूतकथावस्तु-

बीजं कालिदासः वाल्मीकिरामायणम् अवाचिनोत्', इति । अथापि अपूर्ववर्णननैपुणी वस्तुविकल्पनी च प्रतिभा कालिदासस्य अनन्यसदृश्यौ इति नावन् कः निह्नुयात् । कालिदासप्रथितवस्तुनः अभूतपूर्वत्वे तद्वचोभङ्ग्याश्च असामान्यसौष्ठवशालिनीत्वे सन्देहो नास्ति । पूर्वमेघः इति, उत्तरमेघः इति च खण्डद्वयेन समाप्ते काव्येऽत्र न्यूनातिन्यूनानि दशोत्तरशतम् अधिकाधिकानि च विंशत्यधिकशतं पद्यानि लभ्यन्ते[1] । छन्दस्तु सर्वत्र मन्दाक्रान्तैव ॥

यूरोपीयेन शिलर ( Schiller )—नामकेन कविना उपनिबद्धं मेरी स्टुअर्टनामकं काव्यं विषयेण मेघदूतम् अनुहरति । तत्र हि बन्दीकृता राज्ञी यदा बलाहकान् तं देशं प्रति गच्छतः पश्यति यत्र तया यौवनस्य सुखानि दिनानि अतिवाहितानि, तान् प्रतिभाषते । बन्दीकृतायाः राज्याः अस्याः वियोगस्य निरवधिकतया करुणरसस्य प्रधानता अत्र स्फुटैव ॥

बहुतिथात् कालाद् मेघदूतस्य पठनपाठनयोः महान् प्रचारः वर्तते । अस्य बह्व्यः अनुकृतयः टीकाश्च समुपलभ्यन्ते । दशपुरे निर्मितस्य सूर्यमन्दिरस्य प्रतिष्ठां सान्वितुं वत्सभट्टिकविना 'प्रयत्नेन' रचिता प्रशस्तिः, या हि ५३० मिते वैक्रमाब्दे ( ४७३-२ मिते ख्रीष्टाब्दे ) समुत्कीर्णे मन्दसोरस्थे प्राचीनलेखे प्राप्यते, अनुमापयति यत् मेघदूतं तत्र अनुकृतं कविना । यद्यपि मेघदूतस्य रीतिः वैदर्भी, अस्याः प्रशस्तेश्च रीतिः गौडी अस्ति, अथापि कतिचित् पद्यानि अत्यन्तानि दृढं मनोहराणि सन्ति । प्रशस्तौ सर्वाणि मिलित्वा चतुश्चत्वारिंशत् पद्यानि सन्ति यत्र दशपुर नगरवर्णनस्य दीर्घे प्रस्तावे वसन्तं शरदं चापि वर्णयितुं कवेः संरम्भो दृश्यते । मेघदूतं च लङ्का-त्रिविष्टप ( Tibet )—योः भाषाभ्याम् अपि अनूदितम् अस्ति । अनेकानि हृद्यानि पद्यानि च आलङ्कारिकैः लक्ष्यतया तत्र तत्र गृहीतानि ।

---

१—( ११०० तमख्रीष्टसंवत्सरभवस्य ) वल्लभदेवस्य टीकायाम् एकादशाधिकशतं, ( १२०० मितख्रीष्टसंवत्सरजातस्य ) दक्षिणावर्तनाथस्य टीकायां दशोत्तरशतं, ( १४०० तमख्रीष्टसंवत्सरोत्पन्नस्य ) मल्लिनाथस्य टीकायाम् अष्टादशाधिकशतं पद्यानि प्राप्यन्ते । ( ख्रीष्टीयाष्टमशतकगृहीतजन्मनः ) जिनसेनस्य तु विंशत्यधिकशतं पद्यानि विदितानि आसन्, यान्युपादाय समस्यापूर्तिविधया तेन पार्श्वनाथचरितं रचितम् । बलवल्लोकप्रणतयाऽत्र तत्र तत्र प्रक्षेपोऽभूदिति संभाव्यते ॥

खीष्टद्वादशशतके च धोयिको नाम कविः एतदनुकारेण पवनदूतं नाम काव्यं कृतवान् । भूगोलज्ञानार्थम् अपि मेघदूतस्य विशिष्टं महत्त्वं वर्तते, अत्र हि कालिदासकालिकस्य भारतवर्षस्य नाना भूगोलस्थितयः दृष्टिपथम् अवतरन्ति ।

## ( ६ ) कुमारसम्भवम्

एतद्धि सप्तदशसर्गनिबद्धं महाकाव्यम् अस्ति · अस्य अन्त्याः नव सर्गाः कालिदासोत्तरकालभवेन केनचित् कविना निरमायिषत, इति विदुषां मतम्[१] । अत्र न केवलं दैत्यानाम् अपितु जगति यत्किञ्चन भव्यम् अस्ति तस्य सर्वस्य विनाशार्थं बद्धपरिकरं तारकं नाम असुरं व्यापादयितुं अवतीर्णस्य गौरीशङ्करयोः सुतस्य कार्तिकेयस्य जन्मकथा निबद्धा । तत्र प्रथमे सर्गे आदौ देवगन्धर्वाणाम् अपि क्रीडास्थलायमानस्य हिमवतः रमणीयं वर्णनम् अस्ति ।

शिवस्य भवित्री अर्द्धाङ्गिनी पार्वती एतादृश रमणीयपरिस्थितिषु जन्म लब्ध्वा निरुपमाङ्गलावण्यं पुष्यन्ती यौवनम् उपैति । सत्याम् अपि तस्यां यौवनस्थायां 'मा नाम मत्प्रार्थनाऽनङ्गीकारेण शिवो मम अवहेलां कुर्याद्' इति कृत्वा, न तत्पिता शिवम् अभ्यार्थयत् । उक्तं हि—

अभ्यर्थनाभङ्गभयेन साधुर् माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे, इति ।

अस्तु । अथ पार्वतीपिता सख्यनुगतां पार्वतीं शिवम् अनुसेवितुम अनुजानाति ( इति प्रथमः सर्गः ) । एतस्मिन्नेव अन्तरे तारकासुरेण परिपीड्यमानाः सुराः ब्रह्माणम् उपेत्य साहायकम् इच्छन्ति । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इत्याभाणकम् अनुरुन्धानः ब्रह्मापि न तस्य हननं युक्तम् आकलयति यस्मै स स्वयं वरं प्रादात् । तस्मात् स तान् अशंसत् यत् 'पार्वत्याम् उत्पन्नः शिवस्य सुतः तं हन्तुं प्रभविष्यति' इति (इति द्वितीयः सर्गः) । अथ इन्द्रेण आहूतः पुष्पायुधः 'वसन्तश्चेद् मम सहायः स्याद्, अहं शिवमपि धैर्यात् च्यावयेयम्' इति निवेदयति । अथ वसन्तेन सह तस्मिन् शिवतपोवनम् आगते तत्रत्यं स्थावरजङ्गमं सर्वं जगत् सहसा तरुणायमानं सत् कामपरवशं भवति । इदानीं समये पार्वती यथानियमं शिवपूजार्थं तत्रायाति, शिवश्च तां वीक्ष्य किमपि इन्द्रियक्षोभम् अनुभवति । इन्द्रिय क्षोभहेतुं बुभुत्सुः शिवः यावद् इतस्ततः पश्यति तावत् संहित शरचापः कामः तद्दृष्टिपथम् अवतरति; तस्मिन्नेव च क्षणे क्रुद्धस्य शिवस्य

---

१—अधिकमत्र एकोनविंशे खण्डे विलोकनीयम् ॥

तृतीयलोचनात् निःसृतं अग्न्यर्चिः कामं दग्ध्वा भस्मसात् करोति (इति तृतीयःसर्गः)। अथ पतिविरह पृथुव्यथां सोढुम् अपारयन्ती वसन्तेन प्रबोधिता अपि रतिः कामेन साकं चिताम् आरुरुक्षति। 'पार्वत्यां शिवेन उद्-ढायां पतिस्ते पुनर् उज्जीविष्यति' इति आकाशवाणीम् आकर्ण्य लब्ध-सान्त्वना तु सा मरणव्यवसायाद् निवर्तते (इति चतुर्थः सर्गः)। अथ पूजा-विधिना शिव प्राप्तौ हतप्रत्याशा पार्वती कठिनं तपः चरिष्णुः मात्रा निवारिताऽपि हिमालयशृङ्गं गत्वा तथा दुश्चरे तपसि प्रवृत्ता यद् ऋषयोऽपि विस्मयम् आपुः। वृक्षेभ्यः स्वयं पतितानि पर्णानि अपि अभुक्त्वा केवलम् अयाचित प्राप्तेन पानीयेन प्राणान् दधार। न एतत् शिवस्यापि उपेक्षणीयम् आसीत्। अथ स ब्रह्मचारिवेषम् आधाय पार्वती भक्ति परीक्षार्थं तत्पुरः सम्प्राप्तः बहुशश्च शिवदोषान् उदाजहार। तदुदाहृतेषु सर्वदोषेषु पार्वत्या निराकृतेषु अपि यदा ब्रह्मचारिवेषधृक् शिवः पुनः वक्तुं प्राक्रमत, तदा 'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्' इत्युक्त्वा पार्वती यावत् ततश्चलति तावत् शिवः स्ववास्तवरूपेण आविर्भूय 'तपोभिः क्रीतः अद्यप्रभृति अहं तव दासः' इति च तां स्तुवन् तां जग्राह (इति पञ्चमः सर्गः)। ततः शिवस्य सकाशाद् अरुन्धतीं पुरस्कृत्य सप्तर्षयः पार्वतीपितरम् उपेत्य शिवम् उपस्तुवन्ति, पार्वतीपिता च 'गृहिकर्तव्येषु गृहिणीमुख्याः गृहिणः' इति नयेन विषयेऽत्र पार्वतीमातुः अभिमतं जिज्ञासति। सा तु अविलम्बम् अनुजानाति (इति षष्ठः सर्गः)। तदनन्तरं महता समारोहेण विवाहविधिः सम्पन्नो भवति। पार्वत्याः मातुः हर्षशोकसम्मिश्रः भावः कविना निपुणं स्पष्टं च वर्णितः (इति सप्तमः सर्गः)। अथ अष्टमे सर्गे कामसूत्रानुसारेण नवदम्पत्योः प्रेमकेलिं वर्णितवान् कविः॥

कुमारसम्भवे पार्वतीपरमेश्वरयोः यत् सुरतवर्णनं तद् मातापित्रोः सुरत वर्णनमिव अत्यन्तम् अनुचितम् इति आलोचकाः विचारयन्ति[1]। केचिच्च कथयन्ति यद् अपि नाम एतत् कटु आलोचनं विलोक्यैव कालिदासेन न अग्रे प्रबन्धः प्राणायि, अन्यथा 'कुमारसम्भवम्' इति ग्रन्थनाम्ना सूच्यमानं कुमारस्य जन्म यावत् तु अवश्यं काव्यं करणीयम् आसीत् कविना, इति। काव्यमध्ये एव कविः परलोकं जगाम इति तु असम्भाव्यमेव यतोहि कुमारसंभवानन्तरमेव प्रौढिम् आपन्नेन तेन रघुवंशं व्यरचि इति तावत् रघुवंश विलोकिनां स्पष्टम्। अष्टमसर्गोत्तरसर्गेषु ग्रन्थनाम्ना सूच्यमानात् कुमार-

1—परामृश्यतां ध्वन्यालोकः ३।६॥

जन्मनोऽप्यग्रे वर्ण्यते कथा। पार्वत्यां शिवेन जातः स्कन्दः यौवने अतुल-बलविक्रमशाली भूत्वा तारकासुरं जघान।

## (७) रघुवंशम्।

एकोनविंशति सर्ग निबद्धं महाकाव्यम् इदं कालिदासस्य चरमा कृतिः नूनम्। रामायणे पुराणेषु च प्रसिद्धैव कथा यद्यपि अत्र वर्णिता अथापि कालिदासस्य कवि-प्रतिभया तया यद् अभिनवं रूपं धृतं तस्य किमु वक्तव्यम्। महाकाव्यमिदं दिलीप-कथातः आरभ्यते। सकलसद्गुणैकनिधिनाऽपि महाराजेन दिलीपेन कदाचिद् अज्ञानात् सुरभिर् नाम सुरधेनुः अवज्ञाता, येन सा तस्मै निरपत्यत्व-शापं प्रायच्छत्। शापप्रभावश्च सुरभिसुतायाः नन्दिन्याः सकाशात् लब्धेन वरेण केवलं दूरयितुं शक्यः आसीत् नान्यथा (सर्ग १)। महर्षिणा वसिष्टेन अनुशिष्टः दिलीपः तस्माद् नन्दिनीम् आदाय गोपालवत् प्रतिदिनं तां सेवितुं प्रारभत। एकदा कोऽपि सिंहः ताम् आक्रान्तवान्। तां रक्षिष्यन् दिलीपः स्वदेहं सिंहाय समर्पितवान्। तादृशीं तस्य आत्मनि दृढां भक्तिम् आलोक्य नन्दिनी तस्मिन् सुप्रीता बभूव, 'त्वद्भक्ति-परीक्षणार्थं मया एष सिंहः कल्पितः, न स वास्तविकः सिंहः' इत्युक्त्वा च तस्मै यथेष्टं वरं प्रददौ (२)। अथ तस्य पुत्रो जातः यस्य 'रघुः' इति नाम अक्रियत। रघौ यूनि जाते अश्वमेधेन यियक्षुः दिलीपः रघुं ययुरक्षितारं नियुज्य दिग्विजयार्थं तं प्रहिणोति। रघुश्च अश्वरक्षार्थं देवेन्द्रेण सहापि युध्यते (३)। दिलीपानन्तरं रघुः राज्यधुरं वहति, नानादिग्देशांश्च विजित्य विश्वजिता यागेन यजति यत्र स स्वविजयेषु समाहृतं कृत्स्नम् अर्थजातं याचकेभ्यः विश्राणयति (४)। एवं कृतसर्वस्वत्यागं रघुं प्राप्य कौत्सो नाम मुनिः यदा स्वगुरुदक्षिणार्थं तं धनं याचते तदा कुबेर साहाय्येन केवलं स मुनिं पूर्णमनोरथं कर्तुं पारयति। अथ तद्गृहे सुतः एकः उत्पद्यते, तस्मै च अजः इति नाम दीयते (५)। इन्दुमती-स्वयंवरे नानाराजकुमाराः सङ्गताः भवन्ति येषां मध्याद् अजम् इन्दुमती वृणीते (६)। विवाहे सम्पन्ने स्वयं-वरागतं राजन्यकं इन्दुमतीं नयता अजेन विगृह्णाति परं पराभवमेव प्राप्नोति (७)। सुखं भुवं भुञ्जतः अजस्य सहसा इन्दुमतीमरण दुःखं सर्वथा असह्यं भवति। लोके कथञ्चिदपि सान्त्वम् अलभमानः स स्वर्गे तया सह संयोगम् आशंसमानः ताम् अनुमर्तुम् अभिकाङ्क्षति (८)। तम् अनु दश-रथो नाम तदात्मजः सिंहासनम् आरोहति। रामायणे इव [श्रवण] कुमारो-पाख्यानम् अत्रापि वर्ण्यते (९)। नवमोत्तरेषु षटसु सर्गेषु सविस्तरं राम-

कथा प्रक्रियते। षोडशे सर्गे कुशाचरितं सप्तदशे कुशतनय चरितम् अष्टादशे एकोनविंशे च सर्गे तदुत्तरभाविनां नानानृपाणां कथा वर्ण्यते। केषाञ्चित तु सा तन्नाम निर्देशेनैव समाप्यते। काव्यस्य कथा अपूर्णा एव आस्ते। अपि नाम अकाले कालकवलितः कविः न कथापूर्तिं कर्तुम् अपारयत् हन्त !

## (१६) कालिदासग्रन्थानां प्रक्षेपवर्जं मौलिकाः भागाः।

विल्सन महोदयः मालविकाग्निमित्रस्य कालिदासकृतित्वे सन्देहं चकार, वस्तुतस्तु तत् कालिदासस्यैव कृतिः इति तावत् कथितचरम्[1]। शिष्टा रूपकद्वयी सर्वैरपि कालिदासकृतितयैव अङ्गीक्रियते। ऋतुसंहार विषयकः महान् मतिविसंवादः दृश्यते। एतत् कालिदास-कृतितया अस्वीकुर्वताम् एता वाचोयुक्तयः सन्ति—

(क) 'ऋतुसंहारम्' इति नाम्नि संहारशब्दः 'चक्र' वाचकः अस्ति; 'क्रोधं प्रभो संहर संहर' इत्यत्र तु कालिदासेन 'सम्' इत्युपसर्गेण सह 'हृ' धातुः अन्यस्मिन्नेव अर्थे प्रयुक्तः॥

(ख) काव्येऽत्र उपक्रमे घर्मर्तोः रमणीयम् उपसंहारे च वसन्तस्य साधारणं वर्णनं दृश्यते। न चैतत् दुःश्लिष्टत्वं कालिदासकृतौ आशास्यम्॥

(ग) ऋतुवर्णनोदाहरणप्रस्तावे अलङ्कारग्रन्थेषु रघुवंशम् उदाहृतं दृश्यते न ऋतुसंहारम्।

(घ) कालिदासकाव्यत्रय्याः टीकाकृता मल्लिनाथेन न ऋतुसंहारे टीकाकृता॥

(ङ) दशमशतकम् आरभ्य कालिदासग्रन्थटीकाकाराः उपलभ्यन्ते, ऋतुसंहारे तु अष्टादशशतकात् पूर्वं न काऽपि टीका अधिगम्यते॥

'ऋतुसंहारम् अपि कालिदासस्यैव कृतिः, इति मतं बिभ्रतस्तु अभिप्रयन्ति—"ऋतुसंहारस्य कविप्रथमरचनात्वात् तद्ग्रन्थान्तरवत् काव्यप्रौढिः न अत्र अवलोक्यते। टैनिसन गैटे-प्रभृतीनां यूरोपीयमहाकवीनां रचनासु अपि एतत् प्रौढ्यप्रौढिवैधर्म्यं तावत् सुदर्शम्। तस्मादेव रघुवंशस्य पद्यानि लक्ष्यतया आलङ्कारिकैः गृहीतानि न ऋतुसंहारस्य। अस्य सरलसुबोधतयैव च मल्लिनाथेन अपि नात्र टीका व्यरचि। नहि 'ऋतुसंहारं न कालिदासस्य

१—दृश्यताम् अष्टादशः खण्डः।

कृतिः' इति क्वापि प्राचां मतं पश्यामः । मन्दसौरस्थातः वत्सभट्टिकवि-प्रशस्तितश्च अनुमीयते यद् 'एतत्प्रशस्तिकर्त्रा ऋतुसंहारम् अन्वहारि' इति"।

मेघदूतस्य प्राचीनतमटीकायां वल्लभदेवकृतायां १११ पद्यानि लभ्यन्ते मल्लिनाथस्तु ११८ पद्यानि पठति। तद् उत्तरमेघे केषाञ्चित श्लोकानां प्रक्षेपो जातः' इति संभाव्यते ।

रघुवंशम् अधिकृत्य हिलब्रंटमहोदयः 'अष्टादशैकोनविंशौ सर्गौ अस्य न कालिदासकृतौ इत्यकल्पयत्' । यत्सत्यं न अनयोः सर्गयोः तादृशः रस-भावोत्कर्षः तादृशं वा शब्दार्थ सौष्ठवम् अवलोक्यते; तथापि नैनावता तौ कालिदासाकृतितया व्यपेष्टुं शक्येते। नहि अद्यावधि पण्डितान्तरं तथा मतं प्राकाशयत्। अधिकाधिकं 'नात्र कालिदासस्य असामान्या कविकला दृक्पथम् अवतरति' इत्येतावदेव एतद्विषये वक्तव्यम्।

कुमारसम्भवे नवमम् आरभ्य सप्तदशपर्यन्तं सर्वे सर्गाः अकालिदासीयाः खलु सन्ति । तत्कर्तृ कालिदासोत्तरभावि कव्यन्तरमेव । मल्लिनाथेन प्रथमा-ष्टसर्गेषु केवलं टीका कृता । अलङ्कारग्रन्थेषु चापि प्रथमाष्टसर्गस्थानि पद्यानि लक्ष्यतया उदाहृतानि दृश्यन्ते ( रघुवंशस्य तु समग्रसर्गपद्यानि )। शैलीभेदेन, पदविन्यासप्रकारेण कविसामग्र्यन्तरगतेन विशेषेण च भागद्वयस्य कर्तृभेदः सहसा स्फुटो भवति । एषु हि अमौलिकेषु सर्गेषु कालिदासस्य कतिपयप्रिय-पदावल्यः प्रसह्य पुनः पुनः उपात्ताः सन्ति, नूनं-खलु-सद्योऽलं-प्रभृतीनि पद-पूरणार्थपदानि बहुलतया लभ्यन्ते, बहुत्र पादयतिभङ्गदोषश्चकास्ति, प्रचुरः खलु कर्मणि आत्मने पदप्रयोगोऽस्ति, समासान्ते प्रायः 'अन्त' शब्दः कवि-परमप्रीतिकरः प्रतिभाति। एष च 'अन्त' शब्दप्रयोगः मराठीभाषायाम् अधिकरणकारकप्रत्ययीभूतेन 'अन्त' शब्देन साम्यम् आवहति । तस्मादेव जैकोबिमहोदयस्तु 'कश्चिद् माहाराष्ट्रः एषां सर्गाणां कर्ता' इति तर्कयति ॥

## (२०) रूपकाणां नाना संस्करणानि ।

कालिदासस्य अधिकलोकंपृणरूपकाणां नाना संस्करणानि दृश्यन्ते । अनद्भुतं खल्वेतत् । मालविकाग्निमित्रस्य तु केवलम् एकमेव संस्करणम् अद्यावधि उपलब्धम् । परं साहित्यदर्पणे मालविकाग्निमित्रगतो यो ग्रन्थः उद्धृतः प्राप्यते तस्य प्रचलिते मालविकाग्निमित्रग्रन्थाद् भेदे सति अनुमी-यते यत् अस्य संस्करणान्तरम् अपि पुरा प्रसिद्धम् आसीत् ॥

१—अवलोक्यतां तत्कृतः 'कालिदास' इतिग्रन्थः, ४२ तमं पृष्ठम् ॥

विक्रमोर्वशीयस्य द्वे संस्करणे लभ्येते—(१) उत्तरापथीयं (२) दक्षिणापथीयं च। प्रथमं हि देवनागरी वंगीयलिप्योः, चरमं च दक्षिणभारतीयप्रसिद्धासु लिपिषु समस्ति। पूर्वत्र (१६५६ मिते खीष्टवत्सरे जातस्य) रङ्गनाथस्य, अपरत्र च (१४०० मिते खीष्टाब्दे भवस्य) काटयवेमस्य टीका अवाप्यते। उत्तरापथीये संस्करणे तुर्योङ्कः विशालतरः लभ्यते। अत्र हि गीतिनामनिर्देशपुरस्सराणि अनेकापभ्रंशपद्यानि सन्ति, नायकश्च अपभ्रंशे गायति। एतद्धि नाट्यशास्त्रनियमप्रतिकूलं प्रतिभाति, परम् 'उन्मत्तो हि स तदा' इति युक्तिः तदौचित्यं समर्थयति। 'कालिदासकृतानि एतानि पद्यानि' इति तु सहसा नास्थेयम्, यतोहि अन्यकविकृतेषु रूपकेषु याः काश्चिद् अस्य अङ्कस्य अनुकृतयः[1] अवलोक्यन्ते नहि तासाम् एकतरत्र अपि अपभ्रंशबद्धम् एकम् अपि पद्यम् अवाप्यते। 'एवंविधः अपभ्रंशः को ऽपि कालिदासकाले अवर्तिष्ट' इत्यपि च सहसा प्रत्येतुम् अशक्यम्। उत्तरापथसंस्करणे रूपकमिदम् 'त्रोटकं', दक्षिणापथसंस्करणे च 'नाटकम्' अभिख्यायते॥

अभिज्ञानशकुन्तलस्य चत्वारि संस्करणानि सन्ति—(१) वङ्गीयं, (२) देवनागरीयं, (३) काश्मीरिकं, (४) दक्षिणापथीयं च। तत्र आद्यद्वितीये एव मुख्ये। काश्मीरिकं हि वङ्गीय-देवनागरीययोः संम्मिश्रणाद् उत्पादितं, दक्षिणापथीयं च देवनागरीयकल्पं खलु वर्वर्ति। वङ्गीये २२१ मिताः श्लोकाः सन्ति, टीके चात्र शङ्कर-चन्द्रशेखरकृते। देवनागरीये तु केवलं १९४ संख्याकानि पद्यानि, राघवभट्टीया च टीका। 'वङ्गीयं-देवनागरीययोः कतरद् गुणविशेषेण इतरद् अतिशेते' इति तावत् न सुप्रतिवचम्। अथापि 'बृहत्तरं लघुतराद् गुणैः अतिरिच्यते' इति अवसीयते प्रायः। तथाहि हर्षस्य रत्नावल्याम् एकत्र नायिका सागरिका गच्छति, प्रत्यागच्छति, निभृतं नृपवचनानि शृणोति तस्य च पुरः समायाति एतद्धि सर्वं वङ्गीयसंस्करणगतस्य स्थलविशेषस्य अनुकृतिः संभाव्यते। देवनागरीयं तु संस्करणम् अपूर्णमिव भाति। अपि नाम अभिनयार्थं सम्पादितं बृहत्तरसंस्करणस्य लघुतरं रूपम् इदं समस्ति[2]। देवनागरीये 'सुन्दरि! अनिर्वापो दिवसः' इत्यभिधाय दुष्यन्तः शकुन्तलां गमनाद् निवारयति, क्षणेन च 'वत्से! परिणतो दिवसः' इति ब्रुवन्ती गौतमी तत्र आयाति। वङ्गीये तु एतादृशः काल-विषयकः व्याघात-

१—विलोकयन्तु तावद् भवभूतेर मालतीमाधवे नवमांकं, राजशेखरस्य बालरामायणे पञ्चमांकं, जयदेवस्य प्रसन्नराघवे षष्ठांकं, तथा च महानाटके चतुर्थांकम्॥

२—बोलनसनमहाशयोऽप्येवमेवाभिप्रैति।

दोषः अदृश्यः। अथ वङ्गीयगतं प्राकृतं शुद्धतरं खल्वस्ति। 'राजशेखरेण वङ्गीयमेव संस्करणं दृष्टं नान्यत् किमपि, इति च प्रायः निश्चितप्रायम्। वेबरमहोदयस्तु देवनागरीयमेव संस्करणम् उत्तमं मनुते। तदेतच्चिन्त्यम्॥

# (२१) कः कालः कालिदासस्य।

अहो बत भारतीयकविकुलगुरोः कालिदासस्य आविर्भावकालविषये न किञ्चिदपि निश्चितं विदितम्! (१) ५५६ मिते शाके (६३४ मिते ख्रैष्टे संवत्सरे) समुत्कीर्णे ऐहोलशिलालेखे कालिदासकीर्तिः संकीर्त्यते, (२) (६०० मिते ख्रैष्टसंवत्सरे वर्तमानेन) बाणेन स्वहर्षचरितभूमिकायां कालिदाससूक्तयः स्तुताः (३) सुबन्धुश्च एकत्र परोक्षप्रकारेण कालिदासं परामृशति। न च शताद् वर्षेभ्यः न्यूने समये तादृशं सुमहद् यश प्रसर्तुं शक्नोति इतिकृत्वा न्यूनातिन्यूनं बाणात् शतवर्षपूर्वं कालिदासो बभूव इति विज्ञायते। अपिच, खीष्टपूर्वं १८६ तमे संवत्सरे शासकतया शुङ्गवंशः प्रादुर्भूतः तत्र (ख्रीष्टपूर्व १२५ तमस्य संवत्सरस्य अभ्यर्णे) जातः अग्निमित्रो नाम नृपः मालविकाग्निमित्रे नाटके नायकत्वेन वर्णितो निर्वर्ण्यते स एव कालिदासाविर्भावकालस्य परः अवधिः। अनयोः हि अवध्योः अन्तराले पृथक्-पृथक् कालं कालिदासस्य कोविदाः आकलयन्ति। तथाहि—

(१) परम्पराप्रसिद्धं 'ख्रीष्टपूर्वप्रथमशताब्दी कालिदासस्य कालः' इतिमतम्। शकान् पराभूय 'शकारिः' इत्युपपदधारिणा 'विक्रमादित्येन' नृपविशेषेण ख्रीष्टपूर्वं ५७ तमे वर्षे विक्रमाब्दः प्रवर्तितः। तस्यैव सभानवरत्नेषु अन्यतमं किल कालिदासः बभूव इति तावत् परम्परया श्रूयते। वक्ष्यमाणाभिः युक्तिभिश्च मतमिदं समर्थ्यते—

(क) पुराणेषु शुङ्गराजवंशस्य न कोऽपि परिचयः प्राप्यते। 'कालिदासस्य तु वंशोऽयं सुपरिचितः आसीद्' इति तावत् मालविकाग्निमित्रात् स्पष्टं ज्ञायते। पुष्यमित्रः सेनापतिः आख्यायते स्म, स अश्वमेधेन इयाज, वसुमित्रो नाम तत्पौत्रः सिन्धुतीरे यवनान् विजितवान्' इत्यादिकं यद् वस्तुजातं नाटकेऽत्र वर्णितं तत् सर्वम् ऐतिहासिकम्। अपि च, नाट्यशास्त्रानुसारं नाटकस्य नायकेन विख्यातेन कथावस्तुना च इतिहासप्रसिद्धेन भवितव्यम्। गुप्तराजवंशकाले कालिदासश्चेद् उदपत्स्यत, गुप्तैः मन्दीकृतयशस्कम् अग्निमित्रं स कथं विख्यातनायकतया उपादास्यत?

(ख) 'भिट'-मुद्रायां मृगम् अनुधावमानः रथारूढः कश्चिद् नृपः चित्रितः अवलोक्यते। अस्ति च एतच्चित्रस्मारकः वृत्तान्तविशेषः शकुन्तला-नाटके, न तु क्वापि अन्यत्र समग्रेऽपि संस्कृतसाहित्ये। मुद्रा चैषा शुङ्गराज-वंश प्रतिष्ठाकेन्द्रे देशे लब्धा। तस्माद् अनुमीयते यत् 'शुङ्गवंशे नामशेषे असति एव (ख्रीष्टपूर्वं २५ तमवर्षात् प्रागेव) कदाचित् कालिदासो बभूव' इति॥

(ग) कालिदासरचना निर्व्याजसुन्दरतया महाभाष्यकारपतञ्जलि-रचनया साम्यं बिभर्ति। तस्माद् नासिक-गिरनारप्रभृति शिलालेखानां दुष्करशैलीप्रादुर्भावात् प्रागेव कालिदासेन आविर्भूतेन भवितव्यम्॥

(घ) अस्ति च क्वापि क्वापि तथाविधः पदप्रयोगः कालिदासकृतिषु येन तत्समये संस्कृतस्य शिष्टानां भाषितभाषात्वम् अनुमीयते। तथाहि, अमर-कोशे यदर्थवाचकौ पेलव-परमेष्ठिशब्दौ पठितौ न तदर्थाभिधायकत्वेन कालदासेन तौ प्रयुक्तौ॥

(ङ) कालिदासेन च केचित् 'छन्दोमात्रैकगोचराः' शब्दाः प्रयुक्ताः। तस्माद् ज्ञायते 'वैदिक-श्रेण्य (Classical) संस्कृतकालयोः सन्धौ किल स बभूव' इति। सन्धिकालश्च एष ख्रीष्टपूर्वं तृतीयशतकाद् आरभ्य ख्रीष्ट-सम्वत्सरोदयं यावत् खलु अभ्युपगतः। ख्रीष्टानन्तरं प्रारम्भिकेषु शतकेषु जातैः अपि ग्रन्थकारैः न तावद् वैदिकशब्दाः प्रयुक्ताः॥

(च) केवलं मुनितया खलु परशुरामः कालिदासस्य अभिमतः। ऊर्ध्वतने काले तु स एव विष्णोः अवतार[1] विशेषत्वेन प्रसिद्धः॥

(छ) कालिदासाऽश्वघोषयोश्च तुलनात्मकाध्ययनेन तयोः अन्योन्य-सव्यपेक्षत्वं स्फुटं भाति[2]। 'अश्वघोषस्य च शैली यथा कृत्रिमा न तथा कालिदासस्य' इति च केषांचिदेव विमतं स्यात्। तस्मात् कालिदासेन (ख्रीष्टप्रथमशतकभवात् अश्वघोषात्) प्राचीनतरेण नूनं भवितव्यम्। अथ महाकविकालिदासग्रन्थान् स्वबुद्धचरिते यत्र तत्र अश्वघोषः अनुहृतवान् इति यथा संभावयितुं शक्यं न तथा एतत् यद् 'निखिलकविगुणसम्पदा-सम्पन्नः कालिदाससदृशः कविकुलगुरुः अश्वघोषकृताद् बुद्धचरितात् तत्तद्-

---

१—यद्यपि अत्र 'अवतर' शब्दः एव साधुः न तु अवतारः (द्रश्यतां वामनकृतम् अलङ्कारसूत्रम्) अथापि प्रसिद्धिबलेन अवतारप्रयोगोऽप्यदुष्टः॥

२—द्रश्यतां षड्विंशः अष्टाविंशश्च खण्डः॥

वस्तुजातम् अपहृत्य स्वस्य न केवलम् एकस्मिन् अपितु द्वयोः महाकाव्ययोः लोप्त्रस्य सुप्रदर्शनं चकार' इति ॥

(ज) ( ख्रीष्टप्रथमशतकमध्यस्य ) हालस्य सप्तशत्यां पद्ये एकस्मिन् विक्रमादित्यो नाम नृपः स्वत्यागौदार्यगुणैः स्तुतः ॥

(झ) शाकुन्तले च बौद्धधर्मस्य अस्य यत्किञ्चिद्राजपरिग्रहस्य च यः उल्लेखः लभ्यते, तद् अनुमापयति यत् 'ख्रीष्टसम्वत्सरप्रवृत्तेः नातिचिरपूर्वं कालिदासो बभूव, एतर्हि हि काले बौद्धधर्मः नहि सर्वथा राजपरिग्रह-वञ्चितोऽभूद्' इति । अपि नाम दुःखनिर्भरेण हृदयेनैव कालिदासेन उक्तम् 'प्रवर्ततां प्रकृतिहिताय पार्थिवः, सरस्वती श्रुतिमहतां महीयताम् ' इति ॥

इत्थं बहुयुक्तिपुष्टम् अपि मतम् इदं सर्वथाहि अपशङ्कं न विद्यते । तथाहि---

(क) ( हालस्य सप्तशत्यां परामृष्टस्य विक्रमादित्यनृपस्य सत्यत्वे अङ्गीकृतेऽपि ) 'ख्रीष्टपूर्वं प्रथमशतके विक्रमादित्यो नाम कोऽपि नृपः शकान् विजितवान् ' इत्यत्र इतिहासप्रमाणं नोपलभ्यते ॥

(ख) कालिदासनाम्ना सम्बद्धः विक्रमादित्यशब्दः वस्तुतः संज्ञा उत उपपदम् इत्यपि अद्यावधि अनिर्णीतमेव । शब्दोऽयम् उपपदमेव यदि नाम स्यात् , न संज्ञा ॥

(ग) ख्रीष्टपूर्वं ५७ तमे वर्षे प्रवृत्तः सम्वत्सरः विक्रमसंवत्सरः एव आसीद् इत्येतत्साधकं प्रमाणम् अपि नोपलभामहे । एतत् तु तावत् शिलाङ्के-खेभ्यः ज्ञायते यत् 'ख्री.ष्टपूर्वं ५७ तमे वर्षे प्रचारम् आगतः सम्वत्सरः कृतसम्वत्सरः इति नाम्ना मालवसम्वत्सरः इतिनाम्ना वा पूर्वं प्रथां जगाम, 'पश्चात् चिरेण च ( प्रायेण ख्रीष्टाष्टमशतके ) विक्रमसम्वत्सरनाम्ना प्रसिद्धो-ऽभवत्' इति ॥

(घ) विक्रमादित्यनवरत्न्यां च अमरसिंहवराहमिहिरौ अपि स्मर्येते । तौ च युक्त्यन्तरैः पर्याप्तपश्चात्कालभाविनौ विज्ञातौ ॥

## (२) षष्ठशतकवादः ।

(क) ५४४ मिते ख्रीष्टाब्दे विक्रमादित्याभिधेन नृपविशेषेण हूणान् विजित्य स्वविजयस्मारकतया स्व सम्वत्सरः प्रचारितः, काले वृद्धत्वश्रद्धां च लोकस्य विचार्य स्वसम्वत्सरस्य लोकपरिग्रहकाङ्क्षया तेन षट्शताब्दीपूर्वम्

अस्य उदयः दर्शितः[1] इति हि फ़र्गुसनमहोदयः कल्पयांबभूव। 'षट्शताब्दीजाड्यानन्तरं ख्रीष्ट-पञ्चमशताब्द्यां संस्कृतं पुनरुज्जीवितम् अभूत' इति मैक्समूलरोपज्ञेन वादेन च फ़र्गुसनकल्पना पुष्टिं प्राप। शिलालेखप्रमाणैस्तु मैक्समूलरवादः सर्वथा उच्छिद्यते। फ़र्गुसनकल्पना च कपोलकल्पनामात्रं यतोहि ५४४ तम ख्रीष्टाब्दात् शतवर्षपूर्वम् अपि शिलालेखेषु 'कृत' नाम्ना 'मालव' नाम्ना वा तस्य सम्वत्सरस्य सद्भावः प्राप्यते यः ख्रीष्टपूर्वं ५७ मिते वर्षे प्रवृत्तो बभूव ॥

(ख) फ़र्गुसनमतम् उपेक्ष्य अपि केचिद् विद्वांसः कालिदासं ख्रीष्ट-षष्ठशतकभवम् एव मन्यमानाः दृश्यन्ते। तथाहि, रघुदिग्विजयवर्णनं केसरदेशं[2] ( कश्मीरान् इत्यर्थः ) च हूणनिवासम् अधीत्य 'यशोधर्माश्रितः ( ख्रीष्टषष्ठशतके ) खलु कालिदासः आसीत्' इति हार्नले महोदयः उत्पश्यति[3]। मतं तु एतत् न पण्डितान्तरेण समर्थ्यते।

## (३) पञ्चमशतकवादः

केचिद् हि विक्रमादित्योपपदालंकृतं द्वितीयचन्द्रगुप्तं कालिदासस्य मानदं मन्यन्ते; तथाहि—

(क) रघुदिग्विजयप्रसङ्गात लङ्कातः अयोध्याम् आगच्छतः रामस्य मार्गवर्णनप्रसङ्गाच्च रघुवंशे, अथ मेघदूते च, या भारतस्य भौगोलिकी अवस्था पठ्यते सा गुप्तकालभवत्वं कालिदासस्य अनुमापयति।

(ख) समुद्रगुप्तोऽपि खलु तादृशं दिग्विजयं विदधौ यादृशः रघुवंशे रघुदिग्विजयः वर्णितः। तेन हि 'अपि नाम समुद्रगुप्तदिग्विजयं मनसि निधाय कविः रघुदिग्विजयं वर्णयामास' इति अनुमीयते।

(ग) कुमारगुप्तस्य जन्म उपलक्ष्यैव कविना कुमारसम्भवेति नाम कल्पना कृता स्यात्।

---

१—नहि इत्थंकरणे दृष्टान्तः कोऽपि जगदितिहासे क्वापि उपलभ्यते। अथापि हन्त फ़र्गुसनमतम् इतिहासशोधकेषु प्रथितिम् आपत् ॥

२—केसरदेशं स्मारकतया आदाय 'काल्याः = मातुः काल्याः, दासः इति कालिदासः; मात्रा = मात्रा काल्या, गुप्तः = रक्षितः, इति मातृगुप्तः' इति साम्यं पश्यन्तः केचित् कालिदास-मातृगुप्तयोः ऐक्यमेव निश्चिन्वन्ति। निराधरश्च अयं निश्चयः। न च समर्थकः कोऽपि मतस्यास्य दृश्यते ॥

३—जर्नल आफ़ रायल एशियाटिक सोसायटी, १९०९।

(घ) मालविकाग्निमित्रे वर्णितः पुष्यमित्रकृतः अश्वमेधयागः समुद्रगुप्तकृतम् अश्वमेधयागम् अनुध्याय एव कविना कल्पितः इत्यपि संभाव्यते॥

(ङ) ४७३ मिते ख्रीष्टाब्दे वत्सभट्टिना विरचिते मन्दसोरस्थे कुमारगुप्तशिलालेखे अनेकानि पद्यानि कालिदासपद्यानि अनुहरन्ति। तद्यथा,

चलत्पताकान्यबला सनाथान्यत्यर्थशुक्लान्यधिकोन्नतानि।
तडिल्लताचित्रसिताभ्रकूट तुल्योपमानानि गृहाणि यत्र॥
कैलासतुंग शिखर प्रतिमानि चान्या-
न्याभान्ति दीर्घवलभीनि सवेदिकानि।
गान्धर्वशब्दमुखराणि निविष्टचित्र-
कर्माणि लोलकदलीवन शोभितानि॥

इत्येते वत्सभट्टिपद्ये,

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगंभीरघोषम्।
अन्तस्तोयं मणिमयभुवस् तुंगमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस् तैर् विशेषैः।

इति कालिदासीयपद्यम् अनुहरतः॥

(च) भारतस्य पश्चिमोत्तरदिग्विभागे पारसीकानां हूणानां च निवासः रघुदिग्विजये उक्तः। न चैतद् आधुनिकेन पञ्जाबेन सह सर्वम् उत्तरापथाख्यं भरतखण्डं शासतां गुप्तवंश्यनृपाणां कालाद् अर्वाक् संभवति।

(छ) मल्लिनाथ टीकाप्रत्ययेन 'मेघदूते परोक्षतया दिङ्नाग-निचुलौ कालिदासेन परामृष्टौ' इति केचिद् आतिष्ठन्ते। परं प्राच्यसाद्यन्तराभावे अर्वाचीनः मल्लिनाथो नाम कथं नु प्रमाणं स्यात्! अथ कृतेऽपि वा तद्वचसि विश्वासे का हानिः। दिङ्नागगुरोः वसुबन्धोः ग्रन्थः ४०४ मिते ख्रीष्टाब्दे चीनभाषायाम् अनूदितः बभूव; द्वितीयचन्द्रगुप्तश्च ४१३ तमं ख्रीष्टाब्दं यावत् किल महीं शशास।

(ज) पृथिवीच्छायया चन्द्रोपरागः निर्वर्त्यते इति यत् कालिदासेन उक्तं तत् (४९९ तमे ख्रीष्टाब्दे भवस्य) आर्यभट्टस्य सिद्धान्तानुसारेण इत्यपि केचित् कल्पयन्ति। (४०० मिते ख्रीष्टवत्सरे भवस्य) रोमकस्य सिद्धान्तानुसारेण चापि तु एतत् संभवति।

(ऋ) कालिदासप्रयुक्तः ज्यौतिषीयः जामित्रशब्दः यवन ( Greek ) भाषातः अवचितः इत्यपि कैश्चिद् उट्टङ्कितम्। अथ एवं सत्यपि, कीथमतेन ३५० तमात् ख्रीष्टाब्दात् अप्राचीनः कालः केवलं शब्देन अनेन विज्ञाप्यते नान्यत् किञ्चित् ॥

(ॠ) केचित् अश्वघोषस्य प्राकृतं कालिदासस्य प्राकृतात् प्राचीनतरम् उन्नयन्ति। किन्तु "अश्वघोषस्य ग्रंथानां कोशाः ( Mss ) मध्य-एशियायां लब्धाः कालिदासस्य च भारते एव" इति पश्यतां तुलना एषा असाम्प्रतं भाति ॥

इत्थं हि विचार्यमाणः कालिदासकालः ख्रीष्टपूर्वं प्रथमशताब्द्याः ख्रीष्टानन्तरं चतुर्थशताब्द्याश्च अन्तराले कदाचिद् आपतति। विषयेऽत्र एकान्तस्तु निर्णयः दुष्करः। तथा चोक्तं मैक्डानल महोदयेन 'यावद्धि तस्य सर्वेषां ग्रन्थानां भाषाया शैल्याः काव्यकलायाश्च यावतीय-शिलालेखैः प्राचीनालङ्कारकारसिद्धान्तैश्च सह तुलाम् आरोप्य सूक्ष्मा परीक्षा न क्रियते तावत् तस्य एकान्तः कालनिर्णयः असंभवः' इति ॥

## (२२) कालिदासस्य विचारधारा

कालिदासेन सर्वाङ्ग सम्पूर्णः हिन्दुधर्मः खलु प्रतिनिधीयते। तस्य हि चातुर्वर्ण्ये चातुराश्रम्ये च भूयिष्ठा श्रद्धा दृश्यते। एतच्च रघुवंशे प्रारम्भिकेषु पद्येषु पठ्यमानेन

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥

इति पद्येनैव स्पष्टम्।

अथ तस्य मते धर्मार्थकाममोक्षात्मकः एव पुरुषार्थः। मुमुक्षुणा सता एव पुरुषेण यथाधर्मं अर्थ-कामपरेण भवितव्यम्। एतच्च असौ स्वग्रन्थेषु तत्तत्पात्रचारित्र्येण सम्यक् निदर्शयति। तद्यथा, यावद् दुष्यन्तस्य 'क्षत्रिय-कन्या खलु एषा' इति निश्चयो न भवति, तावद् असौ तस्यां न अनुरज्यते। राजसभाम् आगतां च शकुन्तलां स केवलं 'परस्त्री खलु एषा' इति कृत्वा प्रत्याख्याति ॥

कामानुरागविषये च 'तपसा रागो विशुध्यति' इति तस्य मतं ज्ञायते। तस्य नाटकेषु शकुन्तलादयः नायिकाः दुष्यन्तादयः नायकाश्च सर्वे तपसा

आत्मशुद्धिं कृत्वा एव खलु अवाप्तकामाः भवन्ति । स्वमतम् इदं च कविना पार्वतीं प्रति,

'...........तवास्मि दासः.
क्रीतस्तपोभिः ...... '

इति शिवोक्तौ स्पष्टम् अभिहितं दृश्यते ॥

विधि-हरि-हरेतिदेवत्रयस्य एकान्तैक्यमेव कालिदासस्य इष्टं पश्यामः । तथाहि कुमारसंभवे द्वितीयसर्गे ब्रह्मा, रघुवंशे विष्णुः, अन्यत्र च शिवः त्रयोऽपि देवाः तेन स्तुताः । 'काश्मीरिके शैव सम्प्रदाये तस्य मनः सविशेषं भावैकरसं स्थितम् अभूद्' इति प्रतिभाति । 'अस्ति च ज्ञातस्य विस्मरणे प्रत्यभिज्ञानम्' इति यत् प्रत्यभिज्ञानदर्शनं कश्मीरेषु उदितं तदेव हि प्रत्यभिज्ञान-शकुन्तलेन नाटकेन निदर्शितम् इव कालिदासेन । सृष्टिरचनायाम् अधिकृत्य तु रघुवंशात् साङ्ख्य-योगयोः एव अस्य पक्षपातः प्रतीयते । रघुर् हि वार्धके राज्यधुरं स्वपुत्रे निक्षिप्य तपोवनं गत्वा तपश्चर्यानन्तरं योगेन तनुं तत्याज । अपिच, पुनर्जन्म सिद्धान्ते महतीश्रद्धा अस्य विलोक्यते । तथाहि, लोकान्तरे इन्दुमत्या संजिगमिषुः अजः अचिरमृत्युम् अभिकाङ्क्षति, पुनर्जन्मनि कामेन संयोगम् इच्छन्ती रतिः तच्छवेन सह तच्चितताम् आरुरुक्षति । सीता च भाविनि भवे रामेण संयुक्ता बुभूषुः तपस्याम् अनुतिष्ठति ॥

## (२३) कालिदासस्य काव्य शैली

वैदर्भीरीत्याः आदर्शीभूता खलु कालिदासस्य रचना । 'स हि संस्कृत-साहित्ये मूर्धाभिषिक्तः कविः' इति तावत् सर्वसम्मतम् । (६३४ तमे ख्रीष्टाब्दे उत्कीर्णे) ऐहोलशिला लेखे स प्रशस्तः । स्वहर्षचरिते च—

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर् मधुर सान्द्रासु मञ्जरीष्विव जायते ॥'

इति बाणोऽपि तम् उपश्लोकयति ॥

'पुरा कवीनां गणनाप्रसंगे कनिष्ठिकाऽधिष्ठितकालिदासः ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ।'

इति पद्यात् च भारतीयमते कालिदासस्य कवि चक्रवर्तित्वं स्पष्टम् ॥

(१७८९ मिते ख्रीष्टाब्दे) विलियमजोंसकृतं शकुन्तला—जर्मनानुवादम् एव विलोक्य जर्मनमहाकविः गैटेः (Goethe) एवं किल उदीरितवान्-

"[ सुहृद् ! ] यदि भवान् ऋतुमुखे उद्गतान् कोरकान् ऋतुपर्यन्ते पक्वानि फलानि च, येन येन च मनः मोह्यते मोद्यते तर्प्यते (Is feasted) तोष्यते ( Is fed ) तत् तत् सर्वं दिदृक्षति, यया च एकया मधुरया संज्ञया द्यावापृथिव्यौ उभे अभिहिते भवतः तां शुश्रूषते, तदा 'शकुन्तला' इति ब्रवीमि, सर्वं च एकेनैव शब्देन उक्तं भवति" इति ॥

ध्वनिप्रधानं खलु कालिदासस्य काव्यं समस्ति । पुराणानाम् अनलंकृता स्वभावसरला कालिदासोत्तरभाविनां कवीनाम् अलङ्कारभारपीडिता च दुष्करा या शैली तयोः मध्यवर्त्मगामिनी अनन्यसुलभा सहजसुन्दरा परिमित-भूषणभूषिता काऽपि तस्य शैली दृश्यते । यद्यपि च तत्काव्येषु यत्र तत्र भासकाव्यव्यापी प्रसादगुणातिशयोऽपि लभ्यते, अथापि अस्ति तत्रापि कोऽपि अद्भुतः विच्छित्तिविशेषः कलाचमत्कारश्च ।

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥

इति कालिदासीयं पद्यम्

भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ।

( वल्लभदेवस्य सुभाषितावल्यां १३५३ मिते अंके भासनाम्ना पठितम् )

इति भासीयेन पद्येन परमं साम्यं बिभर्ति ॥

कथावस्तुनिर्माणे पात्रचारित्र्यरचने च कालिदासस्य महत् कौशलम् अस्ति । शेक्सपियरस्य इव कालिदासस्य रचनायाम् अपि पात्राणां प्रत्येकं स्पष्टव्यक्तिकं दृक्पथम् अवतरति । अभिज्ञानशकुन्तले हि तावत् कण्व-मारीचदुर्वाससः त्रयोऽपि मुनयः प्रतिस्वं सुव्यक्तव्यक्तिकाः सन्ति । कालि-दासस्य कलाकौशलेन एकमपि वाक्यं दुर्वाससः चण्डं स्वभावम् अन्येषां वा मुनीनां तान् तान् विशिष्टान् गुणान् अभिव्यञ्जयितुम् अलम् । प्रियम्वदाऽनसूययोः शकुन्तलासख्योः प्रथमा हास्यमुखी द्वितीया च गम्भीर-प्रकृतिका । शार्ङ्गरव-शारद्वतयोः कण्वशिष्ययोः अपि एकः शान्तः अपरश्च अमर्षणः । भाषाऽपि कालिदासप्रबन्धेषु यथापात्रं यथाकालं च परिवर्तमाना नितरां सहृदयहृदयानि हरति । तथाहि पुरोहितः शास्त्रभाषया कन्याजनश्च सरलप्राकृतेन व्यवहरमाणः अवलोक्यते ॥

अस्ति च कालिदासः उपमाभिः प्रसिद्धः। तथा ह्युक्तम्—

उपमा कालिदासस्य भारवे रर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयोगुणाः॥ इति॥

उपमानानि अवचेष्यन्ती लोके शास्त्रे च सर्वत्र अप्रतिबन्धं कवेः कल्पना विहरति। तेन हि व्याकरणाऽलङ्कारशास्त्राभ्याम् अपि कालिदासेन उपमानानि उपादीयन्ते। लुप्तोपमाभिः तादृशचमत्कारस्य अनुदयात् पूर्णोपमाः एव प्रायेण कालिदासेन प्रयुक्ताः। वर्ड् स्वर्थः इव कालिदासोऽपि लोके जडतया गृह्यमाणां प्रकृतिं चैतन्यमयीं मत्वा तां मानवकुटुम्बे समावेशयति। अपूर्वा च अस्य जड-चेतन-प्रकृतिपर्यवेक्षणस्य शक्तिः। अग-वन-पवन-प्रभृतिभिः सह संलपन् इव ननु स दृश्यते। पशवः पक्षिणः लताः तरवः सर्वे मनुष्यवत् हर्ष-शोक-चिन्तावन्तः तं प्रतिभान्ति। एतेन हि गुणेन सर्वकवि-अतिशायी किल कालिदासः॥

उपमां व्यतिरेच्य यमकोत्प्रेक्षार्थान्तरन्यासाः[1] तेन बहुलं निपुणं च प्रयुक्ताः। रघुवंशस्य नवमे सर्गे अयम् अनुप्रासानां वृत्तानां च विविधानां निर्माणे आत्मनः कृतहस्ततां दर्शयति। श्लेषाय तु नैष स्पृहयते॥

अस्य काव्यानि अन्यकवीनां मार्गदर्शकायमानानि तावद् अभूवन्। तथाहि, मेघदूतं वत्सभट्टिना अनुकृतम् इति तावद् उक्तचरम्। मालविकाग्निमित्रम् अनुसरता हर्षेण नाटकद्वयं रचितम्। भवभूतिः आत्मनः मालती-माधवे कालिदासम् अनुयाति। दण्डी 'मलिनं हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति पद्यार्द्धं कालिदासाद् गृहीतवान् इति प्रतिभाति। वामनोऽपि कालिदास-प्रबन्धेभ्यः उदाहरति। आनन्दवर्धनाचार्याद् अर्वाक् च कालिदासः विशिष्य लोकस्य प्रीत्यास्पदं भूत्वा बहुशः अधीयते व्याख्यायते च॥

विविधविधवृत्तानां प्रयोगे महद् अस्य कौशलं दृश्यते। मेघदूते अनेन केवलं मन्दाक्रान्तावृत्तं प्रयुक्तम्। रघुवंश कुमारसंभवयोः उभयोः महाकाव्ययोः सर्वसंग्रहेण एकादशसु सर्गेषु इन्द्रवज्रा प्रयुक्ता बहुशश्च श्लोकः। रघुवंशे यथा नानावृत्तप्रयोगः उपलभ्यते न तथा कुमारसंभवे॥

---

1—कालिदासस्य काव्येषु शब्दालङ्काराणां अर्थालङ्काराणां च प्रयोगभारः यथान्यायंसम्यग् विभक्तो दृश्यते। न हि अर्थसम्पदां विनाश्य कदाचिदपि स शब्दालङ्कारान् आयोजयति॥

## (२४) अश्वघोषः

संस्कृते ये कतिपये महाकवयः, तेषाम् अन्यतमः किल अश्वघोषः गण्यते। स हि खण्डकाव्य-महाकाव्य-रूपकेतिविविधकाव्यकर्ता आसीत्। बौद्धकविः एष प्रथितयशसः कनिष्कनृपतेः समसामयिकः अभूत् इत्येषा अनुश्रुतिः वर्तते।[1] त्रिविष्टपादिषु भारतोत्तरदिग्वर्तिषु जनपदेषु प्रसृतस्य बौद्धमहायानसंप्रदायस्य प्रवर्तकेषु मुख्यः किलैष अभवत्। 'अश्वघोषः मध्यभरतखण्डवास्तव्यः[2] पार्श्वभगवत्पादानां[3] शिष्यः, तेषां च असामान्यं शेमुषीबलम् आलोक्य बौद्धदीक्षाम् आददे' इति तस्य जीवनकथातः[4] एकातः ज्ञायते। 'तस्य कण्ठमाधुर्येण मोहिताः अश्वाः अपि शष्पचरणाद् उपरम्य तद्वचोदत्तकर्णाः भवन्ति स्म; तेन हि असौ अश्वघोषः इत्यभिख्यां लेभे इत्यपि वदन्ति॥

## (२५) अश्वघोषस्य नाट्यकला

प्रोफैसरलूडर्समहाशयस्य अस्मासु अयं महान् अनुग्रहः यत् तस्य प्रयत्नैः 'अश्वघोषः रूपकाणां केषाञ्चित् कर्ता किल बभूव' इति विद्मः। मध्य एशियाखण्डे ताडपत्रलिखितं खण्डितकोशं यद् रूपकत्रयम् अधिगतं तत्र शारिपुत्रप्रकरणं नाम एकः रूपकविशेषोऽस्ति। शारिपुत्रेति शारद्वती-पुत्रेत्यस्य सङ्क्षिप्तं रूपम् अस्ति। 'इदं हि प्रकरणं नाम रूपकविशेषः

---

१—४७२ मिते खीष्टवत्सरे चीनभाषायामनूदितयोः संयुक्तरत्नपिटक-धर्मपिटक-निदानयोः कनिष्कगुरुतया अयं स्मृतः॥

२—त्रिविष्टपभाषानूदितस्य बुद्धचरितस्यान्ते पुष्पिकावाक्ये तु साकेताभिजनः स उक्तः॥

३—पूर्णयशो विरचिते तस्य जीवनकथान्तरे तु स पार्श्वभगवत्पादानां प्रशिष्यो-ऽभिहितः॥

४—( ३८४ मितात् ४१७ मितं खीष्टाब्दं यावत् शासतः ) यओज़ाइन (Yao-Tzine) वंशस्य छायायां कुमारस्य, ( कुमारशील ? )-नामा पण्डितः जीवनकथामिमां चीनभाषायाम् अनूवाद। तां संक्षिप्य वैसिलीफ़ महाशयः लघुतरां जीवनकथां कृतवान्। एतां च लघुतरां मिस ई लायलपंडिता अनूदितवती॥

अश्वघोषस्यैव कृतिः' इत्यत्र सन्देहो नास्ति। यतो हि, (१) अस्य पुष्पिका-वाक्ये 'सुवर्णाक्षीसुतः अश्वघोषः' इति कर्तृनामधेयं लिखितम् उपलभ्यते, (२) अत्रत्य पद्यमेकं बुद्धचरितेऽपि पठ्यते, (३) अश्वघोषेण सूत्रालङ्कारे हि अस्य प्रकरणस्य नामधेयम् उदात्तम् ॥

तरुणमौद्गल्यायनः शारिपुत्रश्च भगवतो बुद्धस्य सकाशाद् यैः हेतुभिः बुद्धधर्मदीक्षाम् अवापतुः ते अत्र प्रकरणे विशदिताः। 'यस्मिन् एव क्षणे एतौ द्वौ शिष्यत्वदीक्षाकामौ भगवन्तं बुद्धम् उपयातः, तदैव स एतौ स्वभविष्यद्वाणीं ब्रूते' इत्येतावदेव प्रकरणेऽत्र बुद्धचरिताद् विशेषम् उक्तम्। मृच्छकटिक-मालतीमाधववत् रूपकमिदं नवभिरङ्कैर् निबद्धं प्रकरणसंज्ञितं चास्ति। अत्र च भरतशास्त्रोक्ताः नाट्यनियमाः दृढम् अनुसृताः दृश्यन्ते। धीरोदात्तप्रकृतिकः खलु इह शारिपुत्रो नाम नायकः। बुद्धः तच्छिष्याश्च संस्कृतेन, विदूषकः नीचपात्राणि च प्राकृतेन व्यवहरन्ति। एतादृशधार्मिक-रूपकेऽपि विदूषककल्पना 'अश्वघोषकालात् प्रागेव संस्कृतरूपकाणां स्वरूपं प्रायेण नियमविशेषोपारूढं बभूव' इति गमयति। महता च कौशलेन 'अतः परम्' इतिशब्दद्वयं भरतवाक्यतया रूपकेऽत्र प्रयुक्तम्[१] ॥

नाट्यशास्त्रसिद्धान्तान् अनुपालयन्ति नानापात्राणि स्वसामाजिक-पदानुसारेण अत्र नाना भाषाः भाषन्ते। दुष्टेतिनाम्नः पात्रस्य प्राकृतं मागधी, गोवमित्राख्यस्य पात्रस्य अर्द्धमागधी विदूषकस्य च एतदुभयप्राकृतमिश्रं प्राकृतम् इति प्राकृतत्रयम् अत्र लभ्यते ॥

अवशिष्टस्य बौद्धरूपकद्वयस्य कर्तृविषये न किमपि तत्त्वतो वक्तुं शक्यम्। अपूर्णे हि ते उपलब्धे। अथापि 'अश्वघोष-समसामयिकस्य

१—रूपकेऽस्मिन् 'अतः परमपि प्रियमस्तीति वाक्यं नास्ति, न च भरतवाक्यं नायको ब्रवीति इति कैश्चिदुक्तं हृदये कृत्वा लूडर्समहोदयेन अनुमितं यद् अश्वघोषसमये संस्कृतरूपकाणाम् अवसितिभागस्य स्वरूपं नाट्यनियमैः अस्थिरीकृतं सत् संधिकालेऽवतिष्ठ इति। तदेतत् तर्कोपेतं न भाति। यतोहि, 'अतःपरम्' इति शब्दद्वयप्रयोग एव अतः परमपि प्रियमस्तीति वाक्यस्य उपलक्षकः सन् नियमविशेषानुसरणं कवेरनुमापयति। अन्यच्च, अश्वघोषा-नन्तरभाविनां कवीनां केषाञ्चित् कृतिष्वपि वाक्यमिदं नायकभिन्नेन मानार्हेण व्यक्तिविशेषेणोक्तं दृश्यते। तद्यथा, भट्टनारायणस्य वेणीसंहारे श्रीकृष्णः, दिङ्नागस्य च कुन्दमालायां वाल्मीकिः खलु वाक्यमिदं ब्रवीति ॥

कव्यन्तरस्य कृतिः एषा' इति कल्पनापेक्षया 'अश्वघोषस्यैव कृतिः एषा' इत्येव कल्पना साधीयसी भाति। अनयोः एकं लक्षणावृत्तिप्रधानं (Allegorical) पात्रस्वरूप कल्पनास्वरूपेण प्रबोधचन्द्रोदयेन तुलाम् अधिरोहति। बहवोऽत्र मनोभावाः स्थूलव्यक्तिस्वरूपम् आपादिताः। अनेके च तेषां संस्कृतभाषिणः। अपरं च हास्यमुखप्रकृतिकत्वं कवेः व्यञ्जयद् अंशेन भासकृतचारुदत्तेन साम्यम् अर्हति ॥

## (२६) अश्वघोषस्य महाकाव्यद्वयी

बुद्धचरितं सौन्दरानन्दं चेति महाकाव्यद्वयस्य कर्तृत्वेन अश्वघोषस्य संस्कृतसाहित्ये या प्रतिष्ठा न सा ग्रन्थान्तरकर्तृतया। प्रकाशम् आपन्नस्य बुद्धचरितस्य आधारः केवलम् एकः शारदालिपिबद्धः कोशोऽस्ति यत्र त्रयोदश सर्गाः सम्पूर्णाः चतुर्दशसर्गस्य च आद्यानि चत्वारि पद्यानि सन्ति। एतच्च महाकाव्यं (४१४ तमात् ४२१ सितं यावत् वृत्तेषु ख्रीष्टवत्सरेषु) चीनभाषायाम् अनूदितम् आसीत्। इत्सिङ्गः हि इदम् अश्वघोषकृतितया स्मरति[१]। तत् चीनभाषानुवादेन च त्रिविष्टपभाषानुवादेन च 'अष्टाविंशतिसर्गनिबद्धं खलु महाकाव्यम् इदम् आसीत्' इति ज्ञायते। निर्वाणपर्यन्ता समग्रा बुद्धजीवनकथा कविना अत्र वर्णिता ॥

'ख्रीष्टीयषष्ठसप्तमशतकयोः समग्रेऽपि भारते वर्षे बुद्धचरितस्य पठनपाठनप्रचारः खलु आसीत्' इति तावद् इत्सिङ्गवचनप्रामाण्याद् अवबुध्यामहे। ख्रीष्टैकोनविंशतितम शताब्दीभवः अमृतनन्दनामा कोऽपि कविः उपलब्धैः त्रयोदशसर्गैः सह स्वकृतं सर्गचतुष्टयं संयोज्य काश्यां बुद्धकृतं प्रथमोपदेशं यावत् कथाम् अग्रे निनाय ॥

शृङ्गार-वीररस-नीतिशास्त्रसिद्धान्तादिवर्णनैः युक्तम् उत्कृष्टं खलु महाकाव्यं बुद्धचरितम् आस्ते। अत्र सुन्दरीणां केलयः, कुलगुरुणा बुद्धस्य उपदेशः, बुद्धस्य पञ्चशरेण युद्धम् इत्यादीनां वर्णनानि अतीव मनोहराणि सन्ति ॥

---

१—अस्ति हि जनश्रुतिः यत् 'पाटलिपुत्रात् स्वराजधानीम् आनाय्य कनिष्केण अश्वघोषः स्वाऽऽयोजितायाः बौद्धधर्ममहापरिषदः उपाध्यक्षतया सम्मानितः। अथाश्वघोषः महाविभाषां बौद्धदर्शनसर्वसिद्धान्तसंग्रहीभूतं महाग्रन्थं प्रणिनाय। चीनीभाषायामनूदितः ग्रन्थोऽयमद्यावधि सुरक्षितः ॥

अश्वघोषे बौद्धे सत्यपि अत्र इन्द्रः, माया, सहस्राक्ष इन्द्रः, पृथुः, उलीवान्, वाल्मीकिः, कौशिकः, सगरः, स्कन्दः, मान्धातृकथा, नहुषोपाख्यानं, पुरूरवस उपाख्यानं, शिवपार्वत्युपाख्यानम्, अतिथिसेवाविधिः इत्यादिकाः बहवः हिन्दुपुराणोक्तप्रसङ्गाः कथानुस्यूताः आसाद्यन्ते। उपनिषदां, भगवद्गीतायाः, महाभारतस्य, रामायणस्य च उल्लेखाः लभ्यन्ते। हिन्दुसाहित्ये कृतपरिश्रमः खलु अश्वघोषः आसीद् इति भाति ॥

कालिदासस्य रघुवंशे (७, ५-१२) राजधानीराजमार्गेषु अजस्य यात्रां दिदृक्षवः पौराङ्गनाः यथा हर्म्यवलभीगवाक्षान् अधितिष्ठन्ति तथैव अश्वघोषस्य बुद्धचरिते (३, १३-१९) सिद्धार्थस्य यात्राम् अपि। कुमारसम्भवे यथा कामो हरं प्रहर्तुम् उद्यतो भवति तथा बुद्धचरिते बुद्धम्। एवं हि अश्वघोषकालिदासकाव्यानां बहूनि स्थलानि अन्योन्यसंवादीनि निभाल्यन्ते।[१] सुप्तयोषितां च समानं वर्णनं रामायणे बुद्धचरिते च पश्यामः। रीतिः अस्य समग्रस्य वैदर्भी, गुणश्च बाहुल्येन प्रसादः। कालिदासः इव अश्वघोषोऽपि दीर्घसमासवर्जं प्राञ्जलां रुचिरां, मधुरां विशुद्धां च भाषां प्रयुङ्क्ते ॥

सौन्दरानन्दे तु सुन्दर्याः तत्स्वैमात्रेयस्य नन्दस्य च कथा वर्णिता। सुन्दरीप्रेमान्धोऽपि नन्दः कथं बुद्धेन भिक्षुदीक्षां ग्राहितः इति सर्वम् अस्मात् महाकाव्यात् स्पष्टं भवति। अस्य सर्वेऽपि विंशतिः सर्गाः यथावत् सुरक्षिताः उपलभ्यन्ते। वक्ष्यमाणैश्च हेतुभिः अस्य अश्वघोषकृतित्वम् अवसीयते—

(१) बुद्धचरिते यत् कपिलवस्तुनगरं सङ्क्षेपेण उपवर्णितं तदेव सौन्दरानन्दे विस्तरेण। बुद्धचरिते सिद्धार्थगृहत्यागः व्यासेन उक्तः, सौन्दरानन्दे च समासेन। बुद्धचरिते नन्दस्य बौद्धदीक्षाप्रसङ्गः अल्पैरेव अक्षरैः

---

१—सर्वेऽपि समालोचकाः कालिदासाश्वघोषकाव्यगतं बहुविधवस्तुसाम्यं स्वीकुर्वन्ति। कतरस्तु तयोः प्राचीनतरः इत्यत्र वै तेषां वैमत्यं दृश्यते। धिष्ण्यनिर्बर्हणादयः शब्दाः कतिपये समासाश्च यदर्थकाः एकेन प्रयुक्ताः तदर्थका एव इतरेण। शताब्दीमात्रेण तौ कालतो भिन्नौ इत्येव तु सुविश्वसं न तु शताब्दीत्रयेण इति। अथ अश्वघोषकाव्येषु वैदिकशब्दप्रयोगाणाम् असद्भावात् कालिदासस्य च काव्येषु सद्भावात् प्रतीयते वैदिकश्रैण्यसंस्कृतसंधिकालानन्तरं वै अश्वघोषो जज्ञे इति। अर्थवैमल्यम् उपेक्ष्य शब्दालङ्कारान् योजयितुः अश्वघोषस्य कृतिः यथा कृत्रिमता-दोषोपहता न तथा कालिदासस्य इति अपि च अवधेयम् ॥

समाप्तिं नीतः, सौन्दरानन्दे तु सविस्तारप्रस्तारम् । तदेवं द्वयमपि अन्योन्य-पूरकम् इव स्थितम् ॥

(२) बुद्धचरितम् इव सौन्दरानन्दम् अपि हिन्दूपाख्यानादिप्रसङ्गबहुलं वर्तते ॥

(३) उभयत्र काव्ययोः ऋष्यशृङ्गादीनाम् ऋषिमुनीनां नामानि समानया आनुपूर्व्या आख्यायन्ते ॥

कीथमहोदयः सौन्दरानन्दे अश्वघोषग्रन्थान्तरनामाश्रवणात् 'तस्यायं प्रथमः प्रयत्नः' इत्युत्प्रेक्षते स्म[1] । विपरीतं तु अधिकं संभाव्यते । तथाहि, सूत्रालङ्कारे बुद्धचरितस्य उल्लेखः लभ्यते न तु सौन्दरानन्दस्य । नहि एकोऽपि महायानराद्धान्तः बुद्धचरिते संकेतितः प्राप्यते, सौन्दरानन्दे तु उपान्त्येषु स्थलेषु तत्संकेतचिकीर्षा कवेः स्पष्टा दृश्यते । सौन्दरानन्दे च कविना दार्शनिकवादवर्णनैः महता कौशलेन बौद्धसिद्धान्तानुशासनं विहितम् । सौन्दरानन्दस्य च कवि-सहृदय-प्रशंसिता काव्यशैली बुद्धचरितस्य साधारणपद्यरचनाशैलीम् अतिशेते तराम् ॥

नेपालतः आदर्शपुस्तकानि ( Mss ) अधिगत्य हरप्रसादशास्त्रिणः १९१० मिते खीष्टाब्दे प्रथमवारं सौन्दरानन्दं मुद्रापयित्वा प्रकाशितवन्तः ॥

## (२७) अश्वघोषस्य अन्ये ग्रन्थाः ।

कतिपयग्रन्थान्तराणाम् अश्वघोषकृतितया विद्वद्भिः अङ्गीकरणात् तस्य बहुमुखीप्रज्ञाकत्वं स्पष्टम् ॥

(१) सूत्रालङ्कारः । प्रागपि अस्य उल्लेखः अत्र कृतः अस्माभिः । सूत्रालङ्कारे विनेयानां सुखं बौद्धधर्मसिद्धांतशिक्षार्थं कथा काचिद् वर्णिता । अस्य केवलं त्रिविष्टप (Tibet) भाषानुवादमात्रम् उपलभ्यते ॥

(२) महायानश्रद्धोत्पादः । अत्र हि ग्रन्थे महायानसम्प्रदायस्य पूर्वतरविदुषां सिद्धान्ताः उपवर्णिताः । परम्परया ग्रन्थोऽयम् अश्वघोषकृतितया प्रसिद्धः । एवं चेत्, परमदार्शनिकः खलु अश्वघोषः आसीत् ॥

(३) वज्रसूची । 'राजन्यपुत्रेण ब्राह्मणाः ननु अनुशासनीयाः ।' इति जात्यवलेपं मनसः अपाकर्तुम् अशक्नुवद्भिः ब्राह्मणैः कृतं बौद्धधर्मावमानम् अमृष्यता ग्रन्थकारेण कठोरं खलु चातुर्वर्ण्यव्यवस्था अधिक्षिप्ता । ते च अधिक्षेपाः वज्रसूच्यां सङ्ग्रहेण उक्ताः ॥

---

१—'ए हिस्टरी आफ़ संस्कृत लिटरेचर' पृष्ठ २७ ॥

(४) गण्डीस्तोत्रगाथा। खण्डकाव्यसदृशं किमपि सङ्गीत ( lyric ) काव्यं हि एतत्। विविधवृत्तनिबद्धनानागीतिमयेन काव्येन अनेन कवेः छन्दः शास्त्रे सङ्गीतशास्त्रे च आभ्यन्तरिकत्वं नैपुण्यं च प्रकाश्यते। प्रयोजनं तु अस्य बौद्धधर्मप्रचारः एव॥

## (२८) अश्वघोषस्य काव्यशैली।

शुद्धाम् उत्कृष्टां च वैदर्भीरीतिम् अश्वघोषकाव्येषु अवलोकयामः। भाषा चात्र सरला परिमार्जिता च, रचना गुणमयी उदात्ता च, वचनोपन्यासः विशदार्थः रुचिरश्च। लोकस्य मनोहारिण्या वाण्या बौद्धधर्मशिक्षार्थं किल अश्वघोषेण नाना ग्रन्थाः विरचिताः इति तावत् सौन्दरानन्दस्य उपान्त्येभ्यः स्थलेभ्यः स्पष्टं ज्ञायते। तस्माद्धेतोः न तेन दीर्घसमासजटिलं वक्रोक्तिगुम्फितं गूढनिगूढार्थं काव्यं प्रणायि। दर्शनानां सूक्ष्म सिद्धान्तान् अपि स बालबोधया सरलभाषया अभिव्यनक्ति।

यथा—

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम्॥
तथा कृतिर् निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम्॥

इत्यत्र॥　　( सौ० १६, २८-२९ )

भाषावत् तस्य उपमाः अपि सुगमाः हृदयङ्गमाः च दृश्यन्ते। केचित् तु "काश्चन हि अस्य उपमाः कालिदासस्य उपमाभ्योऽपि अतिरिच्यन्ते" इति मन्यन्ते। तथा हि

'सोऽनिश्चयान्नापि ययौ न तस्थौ तरंस्तरंगेष्विव राजहंसः'

इत्यत्र तेन प्रयुक्ता उपमा　　( सौ० ४, ४२ )

'मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ।'　　( कु० ५, ८५ )

इत्यत्र प्रयुक्तां कालिदासोपमां भृशम् अतिशेते।

पुनश्च,

'दीर्घबाहुर् महावक्षाः सिंहांसो वृषभेक्षणः'　　( सौ० २, ५८ )

इत्यत्र अमुना प्रयुक्ता उपमा

'व्यूढोरस्को वृषस्कन्धः शालप्रांशुर् महाभुजः'　　( रघु० १, १३)

इत्यत्र कालिदासप्रयुक्तातः उपमातः चारुतरा समस्ति" इतिब्रुवन्ति च ॥

अन्ये तु अन्यथैव कथयन्ति। भिन्नरुचिर्हि लोकः इति नयेन कालिदासमेव उपमासौष्ठवेन उन्नमितं ते मन्यन्ते। "नहि अत्र कालिदासेन दिलीपस्य नेत्रे उपमाविषयीकृते; तस्य स्कन्धौ केवलं तेन वृषस्कन्धाभ्याम् उपमिते। वराकः अश्वघोषस्तु भेदं प्रदर्शयिष्यन् काव्यचौर्यमेव आत्मनः विवृतवान्" ( चट्टोपाध्यायः ) ॥

अश्वघोषो हि—

'तां सुन्दरीं चेन्न लभेत नन्दः, सा वा निषेवेत न तं नतभ्रूः।
द्वन्द्वं ध्रुवं तद् विकलं न शोभेतान्योन्यहीनाविव रात्रिचन्द्रौ ॥'[1]

( सौ० ४।७ )

इत्यत्र सरलैरेव शब्दैः दर्शनीयं खलु निर्व्याजरागस्य वर्णचित्रम् अङ्कितवान् ॥

अपिच, कीदृङ्मनोहारि—

स्वेनैव रूपेण विभूषिता हि विभूषणानामपि भूषणं सा ॥ ( सौ० ४-१२ )

इत्यत्र तत्कृतं सुन्दरीसौन्दर्यसरलवर्णनं खल्वस्ति !

यमकरसिकत्वं चापि अश्वघोषस्य दृश्यते। किन्तु यमकानि अस्य अनायाससम्पन्नानि स्पष्टार्थानि च भवन्ति। तद्यथा, 'प्रणष्टवत्सामिव वत्सलां गाम्' इत्यत्र 'उदारसङ्ख्यैः सचिवैरसङ्ख्यैः' इत्यत्र च। महावैयाकरणः खलु अश्वघोषः आसीत्। प्रायेण च अनेन शिष्यशिक्षार्थम् इव काव्येषु स्वेषु अप्रसिद्धव्याकरणप्रयोगाः कृताः। तद्यथा, उपमार्थे 'अस्ति' निपातः ( सौ० १२-१० )। सौन्दरानन्दस्य द्वितीये सर्गे अनेन आत्मनः लुङ्लकारपाण्डित्यं प्रदर्शितं, माति—मिमीते—मीयते इति धातुत्रयस्य कर्मणि लटि मीयते इति रूपं भवति इति च निदर्शितम्। 'गृह्य' 'विवर्धयित्वा' इत्यादिकाः च्युतसंस्कृतिकाः शब्दाः, 'किम्' 'उत' इत्यादि स्थाने 'किम् वत' इत्यादि प्रयोगाः च अस्य ग्रन्थेषु क्वचित् क्वचित् लभ्यन्ते। परं बौद्धग्रन्थानामेव अनेन प्रायशः अनुशीलनाद् एतादृशानि स्खलितानि विचारकाणां वैमनस्यदायीनि न भवन्ति। छन्दः शास्त्रेऽपि अस्य महान् अभ्यासोऽवलोक्यते यतो हि उद्गता वृत्तम् अपि अनेन रमणीयं प्रयुक्तम् ॥

---

१—कुमारसंभवे ( ७-६६ ) अपि एतादृशोऽभिप्रायः प्रकाशितः ॥

अथ कानिचित् पद्यानि अस्य अन्यकविपद्यैः सह शब्दसाम्यम् अर्थसाम्यम् वा वहन्ति लक्ष्यन्ते । तथाहि, अस्य—

काष्ठं हि मथ्नन् लभते हुताशनं, भूमिं खनन् विन्दति चापि तोयम् ।
निर्बन्धिनः किञ्चिन्नास्त्यसाध्यं, न्यायेन युक्तं च कृतं च सर्वम् ॥
इत्येतत् पद्यं

भासस्य—

काष्ठादग्निर् जायते मथ्यमानाद्, भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां, मार्गारब्धाः सर्वयत्नाः फलन्ति ॥
इत्येनेन पद्येन साम्यं बिभर्ति ॥

अथ अश्वघोषस्य—

रामामुखेन्दूनभिभूतपद्मान्, यत्रापयातोऽप्यवमान्य भानुः ।
सन्तापयोगादिव वारि वेष्टुं पश्चात् समुद्राभिमुखं प्रतस्थे ॥
इतीदं पद्यं

निजांशुनिर्दग्धमदङ्गभस्मभिर् मुधा विधुर् वाञ्छति लाञ्छनोन्मृजाम् ।
त्वदास्यतां यास्यति तावतापि किं वधूवधेनैव पुनःकलङ्कितः ॥
इति नैषधचरितस्थेन श्रीहर्षपद्येन अनुकृतमिव विभाति ॥

•

# अथ चतुर्थोऽध्यायः

## काव्यानि

सन्ति तावत् संस्कृतसाहित्ये अचलामराभिनन्दादयः[1] विततयशसः कालकवलितरचनाकाः नामशेषाः बहवः काव्यकर्तारः। यदि नाम कृतयः तेषां सुरक्षिताः अभविष्यन् कालिदासकक्षां प्रथमां ते समासादयिष्यन् इति अनुमीयते। अन्ये च बहवः द्वितीयकक्षाभाजः कवयः सुभाषितावलीषु स्मृतनामधेयाः सन्ति। कृतयः परं येषाम् उपलभ्यन्ते तेषां चर्चां केवलम् अध्याये ऽत्र चिकीर्षामः॥

संस्कृतसाहित्ये रामायणमहाभारतसदृशम् ऐतिहासिकमहाकाव्यं व्यतिरेच्य काव्यसंज्ञितानां कविकर्मणां कोऽपि स्वतन्त्रः वर्गोऽस्ति। एषु हि काव्येषु प्रतिपाद्यार्थापेक्षया गुण-रीत्यलङ्कारादीनि बाह्याङ्गानि एव विशिष्य कवयः कृत परिश्रमाः दृश्यन्ते। अपिच, कविकर्मसु अमीषु कालक्रमेण उत्तरोत्तरं काव्यात्मनः निसर्गसौन्दर्यं प्रमादात् स्थगयित्वा आहार्यमनोहारिताऽऽहरणे विशेषः प्रयत्नःकृतोऽवलोक्यते। वर्गोऽयं महाकाव्यं[2] काव्यं चेति द्वेधा विभज्यते। महाकाव्यस्य केचित् रचयितारः तृतीयेऽध्याये परिचायिताः। अवशिष्टान् कांश्चिद् अत्र अध्याये पूर्वम् उपवर्ण्य पश्चात् काव्य कर्तृ परिचयं कारयिष्यामः।

### (२६) भारविः ( ५५० मितखीष्टाब्दनिकटभवः )

संस्कृते महती भारवेः कीर्तिः खल्वस्ति। कालिदासवत् सोऽपि अस्ति च महाकाव्यस्य प्रणेता। उक्तं च केनचित् तं स्तुवता—

प्रकाशं सर्वतो दिव्यं विदधाना सतां मुदे।
प्रबोधनपरा हृद्या भा रवेरिव भारवेः॥ इति॥

हन्त, न तु कालिदासवदेव काचित् ऐतिहासिकी जीवनकथा भारवेः श्रुतिगोचरी भवति॥

---

१—कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च।
अन्ये कवयः कपयश्चापलमात्रं परं दधति॥

२—एवं खलु दंडिना महाकाव्यलक्षणं व्यधायि—

कालः। वक्ष्यमाणैः साक्ष्यप्रमाणैः यथाकथंचिद् भारविकालः निश्चीयते—

(क) ( ६३४ मिते ख्रीष्टाब्दे उत्कीर्णे ) ऐहोलशिलालेखे कालिदासवत् सोऽपि विश्रुतकवितया स्मृतः ॥

(ख) काशिकावृत्तौ तत्काव्याद् उदाहरणम् उपलभ्यते ॥

(ग) तद्रचना कालिदासरचनया प्रभाविता, तद्रचनया च माघरचना प्रभाविता इव प्रतिभाति ॥

(घ) स्वहर्षचरिते बाणेन भारविनामास्मरणात् 'न स बाणकालं यावत् महतीं प्रसिद्धिं प्राप' इत्यवधार्यते।

तेन हि '५५० तमख्रीष्टसंवत्सरनिकटकालभवः भारविः' इति निश्चीयते ॥

**किरातार्जुनीयम्** । महाकाव्यस्य अस्य कथावस्तु महाभारतस्थवनपर्वणः उपात्तम् अस्ति। मुखपद्यानि एव अत्र भारवेः दुर्लभां कविप्रतिभां व्यञ्जयन्ति। महाभारते राज्यनिर्वासिताः पाण्डवाः स्वदौर्गत्यं चिन्तयन्तः मिथः कथां प्रकुर्वते।

अत्र तु कवि-प्रतिभानोत्थापितः अन्यथा एव रमणीयतरः खलु कथारम्भः पठ्यते। तथाहि, दुर्योधनस्य राज्यव्यवस्थाविज्ञानार्थं युधिष्ठिरेण कोऽपि गुप्तचरः न्ययोजि। स च सर्वं वृत्तं निभृतम् अधिगम्य वनेवसन्तम् एव स्वस्वामिनम् उपेत्य यथाविदितं तस्मै न्यवेदयत्। लोकरञ्जनैः व्यापारैः प्रजाचित्तं वशयितुं यतमानं दुर्योधनम् आकर्ण्य द्रौपदी नचिराद् दुर्योधनेन समं युद्धार्थं पाण्डवान् प्रोत्साहयति ( इति प्रथमः सर्गः )। भीमः ओजस्विभिः शब्दैः द्रौपदीमतम् अनुमोदते। युधिष्ठिरस्तु कृता प्रतिज्ञा अवश्यं पालनीया इत्येव स्वाशयं प्रकाशयति ( इति द्वितीयः सर्गः )। अथ यदृच्छया महर्षौ व्यासे तत्र आगते युधिष्ठिरः विषयेऽत्र तं परामर्शं याचते। स च 'हिमाद्रिं गत्वा तत्र तपश्चरित्वा अर्जुनेन देवसाहायकं प्राप्तव्यम्' इति उपदिशति। कोऽपि यक्षः सहसा तत्रागत्य अर्जुनस्य हिमवन्मार्गदर्शकः भवति ( इति तृतीय सर्गः )। आचतुर्थसर्गाद् एकादशसर्गात्—हेमन्तं हिमाद्रिं जलकेलिं सायंसन्ध्यां, सूर्यास्तमयं, चन्द्रोदयं, तथा च ईदृशं बहुवस्तुजातं वर्णयता कविना महान् चमत्कारः सचेतसां चेतसि उत्पाद्यते। अथ पूर्वं स्कन्दनेतृकेण शिवानीकेन सह ततश्च किरातवेषधारिणा स्वयं शिवेन सह अर्जुनयुद्धस्य, शिवे च प्रीते जाते अर्जुनाय दिव्यास्त्रदानस्य वर्णनम् अत्र अधीयते ॥

**समीक्षा** । नहि कविना केवलं महाभारतीयकथा मात्रं याथातथ्यतोऽत्र अनुवर्णितम्, अपि स्वप्रतिभावशात् अभिनवाभिः कल्पनाभिः तत्र अपूर्वत्वमिव सम्पादितम् । तथाहि, स्कन्दाभिरचितेन शिवकटकेन सह अर्जुनयुद्धं द्वाभ्यां च दलाभ्यां दिव्यास्त्रप्रयोगः इत्यादि सर्वम् अपूर्वम् अस्ति । यथा गन्धर्वाप्सरसां मिथः केलिवर्णने अर्जुनतपोविघातविधाने च, तथा अन्यत्रापि क्वचित् २ पुनरुक्तिः आलोक्यते । सा परं कथाव्यासचिकीर्षया एव इति उन्नीयते ॥

**शैली** । (१) भारतीयेषु पण्डितेषु परम्परया भारवेः अर्थगौरवं प्रसिद्धम् । अनल्पा अस्य वर्णनयोग्यता ऊर्जस्वलश्च वचनोपन्यासः दृश्यते ॥

(२) अस्य शैली नूनं गम्भीरगौरवगुणेन विशिष्टां शोभां पुष्यन्ती नितरां हृद्या रम्या च इत्येतत् प्रथमेनैव सर्गेण पाठकमनसि स्पष्टं भासते ॥

(३) प्रकृत्याः योषितां च सौन्दर्यचित्रणे परमं पाटवं प्रदर्शितं भारविणा । तथाहि,

कतिपयसहकारपुष्परम्यस् तनुतुहिनोऽल्पविनिद्रसिन्दुवारः ।
सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः ।

इत्यत्र पद्ये शिशिर वर्णनस्य रमणीयता दर्शनीयाऽस्ति ॥

(४) क्वचित् क्वचित् अतीव नीत्युपदेशमयाः पाठकमनोरञ्जकाश्च अर्थाः भारविणा निबद्धाः । अनुभवसिद्धसत्यतायुक्तत्वेन च ते लोकोक्तितया तावल्लोके प्रसिद्धिं गताः । यथा,

हितं मनोहारि च दुर्लभं वचः । इति ।
......न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः । इति च ॥

(५) भारविकाव्ये हि उत्तरोत्तरम् अनपचीयमाना बंहीयसी च कविप्रतिभा प्रकाशते ॥

(६) कालक्रमेण उत्तरोत्तरं कठिनात् कठिनतरं किल संस्कृतसाहित्यं स्वविकासे अभूत् । भारविकाव्यम् अपि एतत्काठिन्यदोषविमुक्तं न दृश्यते । संस्कृतालङ्कारशास्त्रिभिः बहुशः श्लाघ्यमानम् अपि काठिन्यम् इदम् कविमनः आयासकारित्वात् काव्यस्य निसर्गधाराप्रवाहबाधकत्वाच्च आधुनिकसमालोचकेभ्यो न रोचते । चतुर्दशे सर्गे भारविणा अलङ्कारयोजनायाः पराकाष्ठा प्राप्ता । तत्र क्वचित् एकस्यैव चरणस्य पुनः पुनः आवृत्त्या समग्रं

पद्यं निर्मितं, क्वचित् अर्थत्रयश्लेषः कृतः, क्वचित् दक्षिण-वाम-दिक्पाठने अपि पाठैक्यस्य अक्षुण्णता दर्शिता।

न नोननुन्नो नुन्नोनो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेनानुन्ननुन्ननुत्॥

इत्येतत् पद्यं केवल नकारेण पद्यान्तैक तकारसहितेन कृतम् अस्ति॥

(७) काव्येऽत्र न दीर्घसमासबाहुल्यं न च अर्थमान्द्यं क्वचिदस्ति॥

(८) व्याकरणानुसरणे भारवेः महद् अवधानं पश्यामः। अत्र स आत्मनः पूर्वभाविनं कालिदासम् ऊर्ध्वभाविनं च माघम् उभयम् अपि अतिवर्तते। तथाहि, अनेन अद्यतने भूते लुङ् अनद्यतने लङ् इतिहासकथावर्णने च लिट् प्रयुक्तः। माघेन २७२ कृत्वः अनेन च केवलं दशकृत्वः लुङ् प्रायोजि॥

(९) छन्दः शास्त्रे च अस्य परमं प्रावीण्यं विलोकयामः। क्वचिद् हि एष दुष्प्रयोज्यम् अप्रसिद्धम् अपि वृत्तं कुशलं प्रयुङ्क्ते। तद्यथा द्वादशे सर्गे अनेन केवलम् उद्गताच्छन्दः प्रयोगः कृतः। प्रायशस्तु अनेन नानाविधानि सरलान्येव वृत्तानि प्रयुक्तानि। पञ्चमे एकस्मिन्नेव सर्गे षोडशविधानि वृत्तानि लभ्यन्ते। भवभूतेः प्रियं शिखरिणीवृत्तम् अनेन कदाचिदेव प्रयुक्तम्॥

## (३०) भट्टिः (६०० मितस्य खीष्टवत्सरस्य अभ्यर्णे)

भट्टिकवेः रावणवधं नाम महाकाव्यं भट्टि काव्यम् इत्येतन्नाम्ना सुप्रसिद्धम् अस्ति। एतद्धि रामायणकथाव्याजेन पाठकानां सुखं व्याकरणशिक्षां ददाति। अस्य चत्वारः खण्डाः द्वाविंशतिः सर्गाश्च सन्ति। प्रथमे खण्डे (आद्यात् चतुर्थसर्गपर्यन्तं) प्रकीर्णनियमाः प्रदर्शिताः। द्वितीये (पञ्चमात् नवमसर्गपर्यन्तम्) मुख्यनियमाः। तृतीये (दशमात् त्रयोदशसर्गपर्यन्तम्) अलङ्काराः। अत्रैव खण्डे त्रयोदशे सर्गे संस्कृतप्राकृतभाषासमकानि पद्यानि निबद्धानि सन्ति। चतुर्थे खण्डे (चतुर्दशात् द्वाविंशसर्गपर्यन्तम्) विविधलकार प्रयोगाः दर्शिताः॥

**शैली**। भट्टेःशैली सुगमा सरला चास्ति। परम् ओजसः शब्दार्थचाकचिक्यस्य च अत्र अभावः खलु वर्तते। कालिदासे यत् उपमासौंदर्यं

भारवौ च यद् अर्थबलं उदुभयम् अपि दुरापम् । दीर्घसमासैः जटिलार्थैश्च परं शैली अस्य सर्वथा मुक्ता । लघ्वक्षराण्येव छन्दांसि प्रायेण अनेन प्रयुक्तानि । कानिचित् पद्यानि अस्य रमणीयतया कालिदासपद्यैः प्रतिस्पर्धमानानि इव खलु दृश्यन्ते । यथा,

रामोऽपि दाराहरणेन तप्तो, वयं हतैर् बन्धुभिरात्मतुल्यैः ।
तप्तेन तप्तस्य यथायसो नः, सन्धिः परेणास्तु विमुञ्च सीताम् । इति ।

**कालः** । श्रीधरसेनस्य आश्रये वलभ्यां भट्टिः स्वकाव्यं रचितवान्—इति तावत् तेन स्वयम् उक्तम् । चत्वारः पुनः श्रीधरसेनाख्याः नृपाः तत्र बभूवुः । चरमश्च तेषां ६४१ तमे खीष्टाब्दे परलोकं जगाम । तस्मात् '६०० मितस्य खीष्टाब्दस्य निकटे भट्टिः अवर्तिष्ट' इति अनुमीयते । वक्ष्यमाणाभिः युक्तिभिश्च कालः एष पुष्टिम् आप्नोति ।

(क) व्याख्यागम्यमिदं काव्यम् उत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ॥

इति भामहोद्धृतं पद्यं प्रायः अक्षरशः भट्टिकाव्ये अवलोक्यते । तेन 'भामहपूर्वं भट्टिः अभूत्' इति अनुमातुं न दुष्करम् ॥

(ख) नहि भट्टिरचितालङ्कारेषु दण्डिभामहयोः अलङ्काराणां काऽपि छाया अवलोक्यते । तेन हि दण्डिभामहपूर्वतनः भट्टिः प्रतिभाति ॥

(ग) व्याकरणपाण्डित्यप्रदर्शने माघेन भट्टिः अनुकृतः इव दृश्यते ॥

**कोऽयं भट्टिः ?** 'अथ कोऽयं भट्टिः' इति तावत् सनिश्चय वक्तुं न शक्यम् । केचित् 'वत्सभट्टि रेव अयं भट्टिः' इति तर्कयन्ति । वत्सभट्टेः व्याकरण स्खलितानि वीक्षमाणानां तु न तयोः ऐक्यं मनोग्राह्यताम् अवलम्बते । केचित् तु 'भर्तृहरिः' इत्यस्य एव अपभ्रंशरूपं भट्टिशब्दं मत्वा भट्टिभर्तृहर्योः अभेदम् आकलयन्ति । 'न हि वत्सभट्टिः, न च भर्तृहरिः, अपि तु कोऽपि अन्यः एव कविः भट्टिः आसीत्' इति तु दृढं संभाव्यते ॥

## (३१) माघः ( ६५० मितात् ७०० मितं खीष्टाब्दं यावत् )

संस्कृतमहाकाव्यप्रणेतॄणां मध्ये प्रतिष्ठितं पदं खलु माघेन अधिष्ठीयते । माघकाव्यमित्यपर-नामधेयकं शिशुपालवधं नाम तत्प्रणीतं काव्यं महाकाव्यम् आलङ्कारिकैः आख्यायते । गुणविशेषैः भारविम् अपि माघः अतिशेते । भारतपण्डितेषु—

तावद् भा भारवेर् भाति यावन्माघस्य नोदयः ।
उदिते तु माघे भारवेर् भा रवेरिव ।। इति ।।
उपमा कालिदासस्य भारवेरर्थ गौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयोगुणाः ।। इति च
माघो माघ इवाशेषं क्षमः कम्पयितुं जगत् ।
श्लेषामोदभरं चापि सम्भावयितुमीश्वरः ।। इति च
मुरारेः पदचिन्ता चेत् तदा माघे मतिं कुरु ।
मुरारेः पदचिन्ता चेत् तदा माघे मतिं कुरु ।।
इति च तावत् प्रसिद्धम् एव ।।

शिशुपालवधे द्वाविंशतिः सर्गाः सन्ति । अत्र च युधिष्ठिरस्य राजसूये श्रीकृष्णकृतः शिशुपालवधः कथावस्तुतया उपात्तः । महाभारतस्था सरला कथा माघहस्तगता भूत्वा विच्छित्तिविशेषशालिनी जायते । महाभारते एकयैव पङ्क्त्या समाप्यमानं यज्ञवर्णनं माघे शब्दचित्रं सद् भासते । महाभारते विद्यमानयोः पद्ययोः सविस्तरं वर्णितानि मतानि इह सङ्क्षेपेण उक्तानि । माघे मुख्ययुद्धात् प्राक् जातम् उपयुद्धादिकं न प्रतिपक्षिसैन्यैः प्रत्युत दूतैः एव कृतं दृश्यते । प्रतिमल्लयुद्धाच्च पूर्वं प्रत्यनीकसैन्ययुद्धं भवति । अस्ति नूनं माघस्य तादृशं किमपि वर्णनशक्ति वैभवं येन हि स महाभारतीयायै सर्वथाऽपि महाकाव्यविषयानर्हायै कथायै सर्वविधाम् अद्भुतरूपसम्पदां प्रादात् । भारविणा स्वकाव्ये हरः, माघेन च स्वकाव्ये हरिः स्तुतः ।।

**शैली—**

(१) माघस्य विपुला वर्णनसम्पत्तिः महती च उत्प्रेक्षाशक्तिः विलोक्यते ।

(२) 'अनेन महान् खलु कामसूत्राध्ययने आयासः उपार्जितः आसीत्' इति भाति । अतीव रमणीयानि मधुराणि च अस्य अनुरागवर्णनपराणि पद्यानि खलु सन्ति । एवं सत्यपि क्वाचित्कः विस्तारः अप्रीतिकरः एव पाश्चात्यविदुषां सर्वथा भवति ।।

(३) माघकाव्ये या सुन्दरालङ्कारयोजना सा अन्यत्र दुर्लभा । अनुप्रासेषु अस्य असामान्यं चमत्कारम् उपलभामहे ।

अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ।।

इत्यादिषु पद्येषु श्लेषोऽपि अस्य मधुरः ।।

(४) प्रायेण साद्यन्तं काव्यम् अस्य श्रमसाध्यं दृश्यते । शब्दार्थसौन्दर्यो-

त्पादने च माघः भट्टि-कुमारदासाभ्यां सह स्पर्धमानः इव अवलोक्यते ॥

(५) अस्ति च तत्र माघे भारवौ च भावसाम्यं । तद्यथा, छन्दो वैविध्ये किरातस्य तुर्यसर्गः शिशुपालस्य तुर्येणैव सर्गेण तुलामर्हति । बाह्याकारप्रकारविविधविधवैचित्र्ये च किरातस्य पञ्चदशेन सर्गेण शिशुपालीयनवदशस्य सर्गस्य सादृश्यं सुदर्शम् । अत्र हि चक्र-गोमूत्रिका-सर्वतोभद्रादीनां शब्दालङ्काराणां निबन्धः दृश्यते । अत्र तृतीयस्य पद्यस्य प्रथमः चरणः केवलेन जकारेण, द्वितीयः तकारेण, तृतीयः भकारेण चतुर्थश्च रेफेण विरचितः अस्ति । क्वचित् क्वचित माघरचनायां भारविकृतौ इव गहनः नीत्युपदेशः शक्तः वचनोपन्यासश्चापि उपलभ्यते । तद्यथा,

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ इत्यत्र ॥

(६) माघस्य वाचि स्पष्टता मधुरता ऊर्जस्वलता च काऽपि निषिक्ता विधिना · वीरोक्तिषु तु अस्य विशिष्टा प्रभावशालिता अवलोक्यते । यथा,

अनृतां गिरं न गदसीति जगति पटहैर् विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस् तव कर्मणैव विकसत्यसत्यता ॥इत्यत्र॥

(७) व्याकरणस्य नानाविधीनाम् उदाहरणानि ददतोऽस्य व्याकरणे परिश्रमः अभ्यासश्च सुव्यक्तः । अपि नाम भट्टिं वीक्ष्य तम् अतिवर्तितुकामेन एव माघेन स्वव्याकरणविज्ञानं प्रदर्शयितुं प्रयतितम् ॥

**कालः—**

(१) माघः वर्मलात (वर्मलाख्य) नाम्नः नृपतेः मन्त्रिणः सुप्रभदेवस्य पौत्रः दत्तकसर्वाश्रयस्य च पुत्रः खलु अभूत् । वसन्तगढ़े प्राप्ते ६८२ मिते वैक्रमाब्दे (६२५ मिते खैष्टाब्दे) उत्कीर्णे शिलालेखे 'वर्मलात' इति नामधेयम् उपलभ्यते । अस्मात् शिलालेखसाह्यात् 'सप्तमशतकस्य अपरार्द्धे माघः बभूव' इति अनुमीयते ॥

(२) माघकाव्यस्य प्रथमसर्गे एकादशद्वादशयोः पद्ययोः वृत्तिन्यास शब्दौ पठ्येते । मल्लिनाथमतेन शब्दाभ्याम् एताभ्यां काशिकावृत्तिः काशिका वृत्तिन्यासश्च गम्यते । इत्सिङ्ग साह्येण च वयं जानीमः यत् काशिकावृत्ति कर्त्रोः जयादित्यनामा अन्यतरकर्ता ६६१ मिते खैष्टाब्दे पञ्चत्वं गतः । (न्यासश्च जिनेन्द्रबुद्धेः कृतिः । न तु इत्सिङ्गेन एतद्विषये किमपि उपन्यस्तम् ।) अथ यद्यपि अनेन साह्येण

अष्टमशतकस्य पूर्वार्द्धे माघस्य जन्मकालेन पतितव्यम्; परं नास्य साद्यस्य विशिष्टं महत्त्वं दातुं शक्यते। यतो हि स्वहर्षचरिते 'ग्रन्थग्रन्थयो गृहीतवाक्या कृतगुणपदन्यासा लोके इव व्याकरणेऽपि' इत्यत्र बाणोऽपि वृत्तिन्यासशब्दौ प्रायुङ्क्त। पुरातनतरौ एव बाणोल्लिखितौ वृत्तिन्यासौ माघेन परामृष्टौ इति संभाव्यते॥

महाराजभोजनामधेयानुलग्नं प्रायः माघनामधेयं प्रसिद्धम्।[1] एवं च केचन एकादशशतकभवं माघं मन्वते। परे तु इतिहास दूरापेताम् एव प्रसिद्धिम् इमां वदन्ति। स्वराजस्थानाख्यग्रन्थे कर्नलटाड महोदयस्तु व्याकरणेतिहासोभय कार्यसाधकं किमपि ग्रन्थसूचीपत्रम् अवलम्ब्य क्रमेण ५७५ मिते ६६५ मिते[2] १०४२ मिते च खै-ष्टाब्दे मालवेषु वर्तमानान् भोजाख्यान् त्रीन् नृपतीन् अवर्णयत्। तस्मात् प्रसिद्ध्याः अस्याः सर्वथा निर्मूलत्वमेव सहसा वक्तुं न शक्यम्॥

(४) भारविं भट्टिं च तत्र तत्र प्रकरणे अनुकुर्वतः माघस्य ताभ्याम् ऊर्ध्वतनत्वं तावत् स्पष्टम् एव। न च 'माघेन नागानन्दमपि दृष्टम् आसीत्' इत्यत्र कोऽपि सन्देहः। 'सुबन्धुः माघात् लाभम् उपार्जयत्' इति यत् कैश्चित् उट्टङ्कितं अविचार-विजृम्भितं तत् तु केवलं प्रतिभाति॥

## (३२) हरविजयकारः रत्नाकरः

### (८५० मितस्य खीष्टाब्दस्य निकटभवः)

पञ्चाशत् सर्गनिबद्धं बृहत्कायं खलु हरविजयं नाम महाकाव्यं ८५० मितखीष्टसंवत्सरस्य समीपवर्तिनि काले किल रत्नाकरः[3] चकार। अत्र हि शिवस्य अन्धकासुरोपरि विजयः वर्णितः। परं काव्येऽत्र न वर्णनानुरूपः सर्वसर्गसमभारः अवलोक्यते। न च लोकप्रियम् इदम् अस्ति। अत्र माघस्य प्रभावः सुलक्षः। क्षेमेन्द्रः वसन्ततिलकारचनचातुरीं रत्नाकरस्य स्तौति॥

---

१. यथा प्रभावकचरिते॥

२. ६६५ मिते संवत्सरे योऽवर्तिष्ट तस्य भोजस्य सत्ता ७१४ मिते खीष्टाब्दे उत्कीर्णेन मानसरोवर शिलालेखेनापि प्रमाणी क्रियते॥

३. एष राजानकः इति वागीश्वरः इति च उपपदद्वयं धारयति।

# (३३) श्री हर्षः

( ११५० मितात् १२०० मितं खीष्टसंवत्सरं यावत् )

संस्कृतसाहित्येतिहासे नैषधीयचरितं नाम (सङ्क्षेपार्थं यत् 'नैषधम्' इति प्रसिद्धम्) अन्तिमं महाकाव्यं कन्नौजाधिपतेः महाराजजयचन्द्रस्य परिगृहीतेन श्री हर्षेण[1] द्वादशशतकोत्तरार्द्धे लिखितम्। अत्र द्वाविंशतिः[2] सर्गाः सन्ति, दमयन्तीपरिणय-पर्यन्ता च नलकथा वर्ण्यते। चरमे सर्गे नायकनायिकयोः मिथोऽनुरागरञ्जितसम्वादेन समाप्तिं व्रजतः काव्यस्य अस्य निर्वहणं सावशेषं समस्ति। तार्किकेण सताऽपि श्रीहर्षेण विवाहकथावर्णने कामसूत्रं यत् काव्यपरिणतं कृतं तेन महती अस्य कविप्रतिभा अभिव्यज्यते। अनल्पकविप्रतिभावशादेव अयं तादृक् सरल कथाम् अपि उपादाय एतादृग्रमणीयमहाकाव्यप्रणयनं चकार। काव्यम् अस्य भारतीयैः काव्यमर्मज्ञैः महाकाव्यसंज्ञया व्यवह्रियते। न चात्र काचिद् अतिशयोक्तिः विभाव्यते। "काव्यप्रकाशकर्तुः मम्मटभट्टस्य भागिनेयः किल श्रीहर्षः अभूत्। सगर्वं श्रीहर्षेण तस्य दर्शितं नैषधं विलोक्य तु मम्मटेन भणितम् 'अहो बत किञ्चित्कालपूर्वं चेत् काव्यम् इदं मम दृक्पथम् अवातरिष्यत्, नाऽहं स्वकाव्यप्रकाशस्य दोषप्रकरणार्थम् उदाहरणान्वेषणे तादृशं महान्तं क्लेशम् अन्वभविष्यम्! इति।" एवं या दन्तकथा श्रूयते, अनितिहासविदां मनोरञ्जनमात्रम् एतत् विज्ञेयम्॥

श्लेषरचनायां महानिपुणः श्रीहर्षः सुश्लिष्टां भाषां प्रयुङ्क्ते चतुरमधुरया च भङ्ग्या मनोगतं वाचि निवेशयति। पद-पदान्तगताः अनुप्रासाः अस्मै भृशं रोचन्ते। समग्रेऽपि ग्रन्थे केवलम् एकोनविंशतिविधानि छन्दांसि अनेन प्रयुक्तानि। उपजातौ वंशस्थे च अस्य महती प्रीतिः प्रतिभाति॥

---

१—खण्डनखण्डखाद्यादीनि ग्रन्थान्तराणि अपि एष प्रणिनाय॥

२—'श्रीहर्षः षष्टिभिः विंशत्युत्तरशतेन वा सर्गैः युतं नैषधं प्रणीतवान्। अवशिष्टाश्च सर्गाः कदाचित् प्राप्ताः भविष्यन्ति' इत्यपि केचित् कथयन्ति (विलोक्यतां कृष्णमाचार्यकृतः ए हिस्टरी आफ़ संस्कृत लिटरेचर इतिनामा ग्रन्थः ४२ तमं पृष्ठम्)। परं 'सम्प्रति उपलभ्यमानाद् ग्रन्थाद् अधिकं कविः लिखितवान्' इति संशयाऽस्पृष्टं न भाति॥

हरविजयवर्जं सर्वाणि महाकाव्यानि इमानि सुप्रसिद्ध-टीकाकारेण मल्लिनाथेन व्याख्यातानि लभ्यन्ते ॥

# (३४) काव्यकर्त्तारः कवयः।

(१) वत्सभट्टिः (४७२-३ ख्री०)। मन्दसौरस्थ सूर्यमन्दिरे ५२६ मिते विक्रमाब्दे समुत्कीर्णायाः प्रशस्तेः कर्ता किल कविरेषः। प्रशस्तिश्च गौडीरीतिनिबद्धा दीर्घसमासबहुला। साहित्यसिद्धान्त विज्ञताम् आत्मनः प्रकाशयितुं कवेः महान् प्रयासः अवलोक्यते अत्र। प्रशस्तौ अत्र कविना दशपुराभिध-नगरवर्णनं वसन्तशरदवर्णनं च योजितम्। वसन्ततिलकाप्रमुखानि द्वादशविधनानावृत्तानि अत्र प्रयुक्तानि। क्वचित् क्वचिद् युग्मविशेषकादिकम् अर्थानुरूपशब्दरचनां च रुचिरां पश्यामः। तद्यथा, द्वाविंशे पद्ये राजगुणवर्णनपरे प्रथमचरणत्रये कोमलानि पदानि राजदण्डशक्तिवर्णनपरे च चतुर्थचरणे 'द्विड्दृप्तपक्ष क्षपणैकदक्षः' इति परुषाक्षराणि वीक्षामहे। एकादशद्वादशयोः पद्ययोः मेघदूतम् ऋतुसंहारं च अनुकर्तुं प्रयतितं कविना इति भाति॥

(२) सेतुबन्धम्। 'माहाराष्ट्रप्राकृतनिबद्धं काव्यम् अदः कविना कश्मीरनृपतिप्रवरसेनकारितस्य वितस्तासेतोः स्मारकत्वेन कृतम्' इति वदन्ति दण्डि-बाणाभ्यां भृशं प्रशंसितम् इदं कालिदासकृतितया खलु प्रसिद्धम्। दीर्घसमासबहुलत्वात् तु अस्य न तथा संभाव्यते ॥

(३) कुमारदासकृतं जानकीहरणम् (ख्रीष्टसप्तमशतकोदितम्)। (क) पूर्वं काव्यस्य अस्य शब्दप्रतिशब्दशः सिंहलभाषानुवादः एव विदितः अभूअथ किञ्चित्कालानन्तरं तु मूलम् अपि दक्षिणापथे प्रकाशतां गतम्।

(ख) (५१७-२६ ख्री० ) सिंहलीयः नृपतिविशेषः, यः किल कालिदासमृत्युहेतुः अभूत्, अस्य कर्तृतया गृह्यते। दुःसंभवं तु एतत् प्रतिभाति।

प्रतिपाद्यार्थदृशा रघुवंशानुकारे काव्ये अत्र पञ्चविंशतिः सर्गाः सन्ति। प्रथमे सर्गे अयोध्यायाः महाराजदशरथस्य तत्पत्नीनां च, तृतीये जलकेलेः, वसन्तस्य सूर्यास्तमयस्य रात्र्याः प्रभातस्य च, अष्टमे पुनः सूर्यास्तमयस्य रात्र्याः च, एकादशे वर्षर्तोः, द्वादशे च शिशिरस्य रमणीयानि वर्णनानि निर्वर्ण्य 'असामान्या कवेः वर्णनशक्तिः खलु आसीद्' इति अवसीयते ॥

(घ) कालिदासस्य प्रभावः। कथावस्तुनः शैल्याः च निर्धारणे कवेः

कालिदासाधमर्ण्यं स्पष्टं लक्ष्यते। रघुवंशे द्वादशे सर्गे यथा यश्च अर्थः प्रतिपादितः कालिदासेन स एव तथैव च जानकीहरणकर्त्रा अपि। अपि च, कालिदासस्य 'प्रियेषु सौभाग्यफला हि चारुता' (कु० सं० ५, १) इत्युक्तिरेव जानकीहरणे 'स्वामिसम्मदफलं हि मण्डनम्' इत्युक्त्या अनुकृता। अन्यच्च कुमारसंभवे अष्टमे सर्गे दम्पत्यनुरागस्य यादृशं वर्णनं तादृशमेव जानकीहरणेऽपि अष्टमे सर्गे॥

(ङ) शैली। (१) जानकीहरणस्य शैली वैदर्भीरीतिमयी सुन्दरानुप्रासशालिनी चास्ति॥

(२) चारुता अस्य काव्यस्य विशिष्टो गुणः। अध्यापकप्रवरकीथमतेन[1] हि सुरुचिराः खलु अत्र शब्दार्थालङ्काराः, स च छन्दसां वर्णानां च चमत्कारः यः संस्कृतभाषाम् अन्तरा अन्यत्र अलभ्यः।

(३) चेतोहरस्थितीनां चित्रणे कवेः महती निपुणता दृश्यते। तथाहि स्त्रीसौन्दर्यं वर्णयन् स आह—

पश्यन् हतो मन्मथबाणपातैः, शक्तो विधातुं न निमील चक्षुः।
ऊरू विधात्रा हि कृतौ कथं तावित्यास तस्यां सुमतेर् वितर्कः॥इति॥

अपिच, क्रीडापरस्य बालरामस्य बालभावम् आलिखन् स आह—

न स राम इह क्व यात इत्यनुयुक्तो वनिताभिरग्रतः।
निजहस्तपुरावृताननो, विदधेऽलीकनिलीनमर्भकः॥ इति॥

अचकमत—हलचर्स—मर्साविन् — पश्यतोहर—जम्पती—सौख्यरात्रिकं-प्रभृतीनाम् अप्रसिद्धानां पदानां प्रयोगात् कवेः व्याकरणप्रियत्वं सुपरिष्कृतभाषाप्रयोगाच्च भाषापाण्डित्यम् अपि अस्य स्पष्टम्॥

(५) छन्दोविज्ञाने च कविः आभ्यन्तरिकः खलु आसीत्। तथाहि, द्वितीये षष्ठे दशमे च सर्गे प्राचुर्येण अनुष्टुप्, तृतीये पञ्चमे नवमे द्वादशे च सर्गे प्रायेण वंशस्थं प्रायोजि कविना॥

(च) कालः। (अ) तस्य काशिकावृत्तिः (प्रायेण ६५० ख्री०) परिचिता बभूव इत्यत्र सन्देहो नास्ति॥

(आ) माघे अस्य पद्यम् एकं प्रतिफलितमिव दृश्यते तस्माद् अयं माघात् प्राचीनः सिध्यति॥

---

१—कीथकृतः ए हिस्टरी आफ़ संस्कृत लिटरेचर नामकः ग्रन्थः, पार्श्वम् १२१॥

(इ) वामनेन पद्यस्य चरणारम्भे 'खलु' प्रयोगस्य दुष्टत्वस्य यद् उदाहरणं प्रत्तं तत् जानकीहरणे प्राप्यते। तस्माद् 'वामनस्य जानकीहरणं दृष्टचरम् आसीद्' इति प्रतीयते॥

(ई)    जानकीहरणं कर्तुं रघुवंशे स्थिते भुवि।
कविः कुमारदासश्च रावणश्च यदि क्षमः॥

इति पद्ये राजशेखरः कविम् इमं प्रशंसति। तेन हि 'खीष्टसप्तमशतकापरार्द्धे कदाचित् कुमारदासः अवर्तिष्ट' इति अनुमीयते॥

(४) **वाक्पतेः गउडवह** (अष्टमशतकप्रथमचरणे) गउडवह (गौडवध) नामकं प्राकृतनिबद्धं काव्यं वाक्पतिना खीष्टाष्टमशतकस्य प्रथमे भागे प्रणीतम्। अत्र हि वाक्पतेः अभ्युपपत्ता कान्यकुब्जाधिपतिना यशोवर्मणा कृतः गउड (गौड)-नृप-विशेषस्य न्यक्कारो वर्णितः। अत्र दीर्घसमासप्रयोगदर्शनात् ज्ञायते यत् 'क्लिष्ट-रचना-चातुरी-सम्पादनं प्रति संस्कृतकविषु या विशिष्टा प्रवृत्तिः आसीत् प्राकृतकवयोऽपि तस्यै स्पृहयन्ते स्म' इति। काव्यार्थे च वाक्पतिः भवभूतेः अधमर्णः खलु बभूव॥

(५) (द्वादशशतकीयस्य) **कविराजस्य राघवपाण्डवीयम्**। राघवपाण्डवीयस्य कर्ता कविराजः 'सूरिः' इति 'पण्डितः' इति चाप्यभिख्यायते। राघवपाण्डवीयं नाम काव्यं ११८० मितं खीष्ट सम्वत्सरं निकषा कादम्बकामदेवाभिधस्य नृपस्य परिगृहीतेन सता कविना कृतम् इति भाति। काव्येऽत्र श्लेषरचनया रामायणीया महाभारतीया च कथा युगपद् वर्णिता। यथा,

'नृपेण कन्यां जनकेन दित्सिताम्, अयोनिजां लम्भयितुं स्वयंवरे।
द्विजप्रकर्षेण स धर्मनन्दनः, सहाऽनुजस् तां भुवमप्यनीयत॥'[1]

'बाण-सुबन्धुवर्जं नहि कव्यन्तरं श्लेषरचनायां माम् अतिशेते' इति तावत् कविना स्वयं स्वविषये प्रौढम् उक्तम्।

---

१. स धर्मनन्दनः (प्रजापालकत्वाच् चतुर्वर्णाश्रमधर्मवर्धको रामः, धर्मस्य च पुत्रो युधिष्ठिरः) द्विजाप्रकर्षेण (द्विजनाम्ना उत्तमेन—विश्वामित्रेण व्यासेन च) नृपेण जनकेन (नृपेण सीरध्वजेन, पितृ रूपेण नृपेण द्रुपदेन च) दित्सितां (दातुम् इष्टाम्) अयोनिजां कन्यां (सीता-द्रौपद्योः उभयोरपि अमानुषीत्वाद् 'अयोनिजा' इति विशेषणं) लम्भयितुं सहानुजः (सलक्ष्मणः साजुर्नादिकश्च) स्वयंवरे भुवम् अपि अनीयत॥

(६) **हरदत्तसूरि विरचितं राघवनैषधीयम्**। अज्ञाततिथिके काव्येऽत्र रामस्य नलस्य च कथे समं वर्णिते।

(७) **चिदम्बर-रचितं राघव-पाण्डवीयं यादवीयम्**। काव्येऽत्र रामायणीया महाभारतीया भागवतीया चेतिकथात्रयी युगपद् वर्णिता।

(८) **हलायुधकृतं कविरहस्यम्**। क्रिया-रूपावलीं विशदीकर्तुं दशमशतके काव्यम् इदं प्राणीयत। प्रसङ्गाद् राष्ट्रकूट नृप कृष्णस्य (९४०–५६ ख्री०) प्रशस्तिश्चात्र कृता।

(९) **मेण्ठः** ('भर्तृमेण्ठः' इति 'हस्तिपकः' इति च विदितः) मातृगुप्तो नाम नृपो मेण्ठस्य हयग्रीववधं भृशं तुष्टाव। वाल्मीकि-भवभूति-राजशेखर-तुल्यां कविपदवीं प्राप्तवतोऽस्य काव्यजगति प्रतिष्ठा स्पष्टा। मङ्खेन च भारवि-सुबन्धु-बाण-कक्षाऽस्मै प्रत्ता। सुभाषितेषु कतिचित् पद्यानि अस्य नाम्ना सङ्गृहीतानि लभ्यन्ते। षष्ठशतकोत्तरार्धेऽयं जज्ञे' इति अनुमीयते॥

(१०) **मातृगुप्तः**। अनन्तरम् उपरि स्मृतनामधेयो मातृगुप्तो नाम नृपः स्वयं कविः आसीत् इति तावत् प्रसिद्धम्। कल्हणमतेन कश्मीरनृपतेः प्रवरसेनस्य नृपान्तरेण अव्यवहितः पूर्वपुरुषः खलु स बभूव। केचित् तु कविकालिदासाद् अभिन्नमेव मातृगुप्तम् आचक्षते। न च तत्र प्रमाणं किमपि समीचीनं दृश्यते। भरतनाट्यशास्त्रे टीका काऽपि अनेन कृता इति श्रूयते। केवलम् उद्धरणान्येव परम् अस्याः टीकायाः उपलभ्यन्ते। कालश्चास्य दुष्परिच्छेदः॥

(११) **रावणार्जुनीयं** (सप्तमशतकोपकण्ठे जातेन) **भौमकेन** रचितम्। काव्येऽत्रसप्तविंशतिसर्गनिबद्धे रावणस्य अर्जुनकार्तवीर्यस्य च कलह कथा प्रकृता। व्याकरणनियमव्याख्यानार्थं प्रणयनम् अस्य खलु बभूव॥

(१२) (नवमशतकीयस्य शिवस्वामिनः) **कप्फणाभ्युदयम्**। काव्यम् इदं कश्मीरनृपतेः अवन्तिवर्मणः आश्रये निवसता बौद्धेन शिवस्वामिना नवमशतकोत्तरार्धे विरचितम्। अवदानशतकात् कथावस्तु उपादाय कविना ह्यत्र दाक्षिणात्यस्य नृपविशेषस्य बौद्धधर्मदीक्षाग्रहणं वर्णितम्। अत्र भारवेः माघस्य च प्रभावः सुलक्षः। अत्र हर्षकृतनागानन्दोल्लेखश्चापि उपलभ्यते॥

(१३) **कादम्बरी-कथा-सारः**। महाकाव्यपरिपाटीम् अनुसृत्य कश्मीराभिजनः अभिनन्दः नवमशतके कादम्बरी कथासारं प्रणिनाय॥

(१४) (एकादशशतकभवः) क्षेमेन्द्रः । कश्मीराभिजन एव क्षेमेन्द्रः १०३७ मिते ख्रीष्टाब्दे महाभारत-कथासाररूपां भारतमञ्जरीं प्रणीतवान् । १०६६ मिते काले अयं दशावतार-चरितं चकार । अत्र भगवतः सुगतस्य चरितम् अपि नवमावतारतया वर्णितम् । रामायणमञ्जरी पद्यकादम्बरी च अस्यैव कवेः कृती ॥

(१४) (द्वादश-शतक-जातस्य) मङ्खस्य श्रीकण्ठचरितम् । मङ्खोऽपि कश्मीराभिजन एव बभूव । श्रीकण्ठ (शिव) कृतं त्रिपुरासुरस्य पराभवं कथा-वस्तुतया उपादाय तेन काव्यम् इदं व्यरचि ॥

(१५) (१५०२ मिते ख्रीष्टाब्दे रचितं) रामचन्द्रस्य रसिक रञ्जनम् । काव्यस्य अस्य रचना अयोध्यायां किल निष्पन्ना । अनुलोम-प्रतिलोम-पाठेन काव्यम् इदं क्रमेण शृङ्गार-शान्तरसौ समर्पयन् विदुषां प्रियंभावुकं वरीवर्ति ।

(१६) कतिपयानि जैनकाव्यानि । जैनसाहित्ये प्रसिद्धानां कतिपय-काव्यानां परिचयः अधस्तात् प्रदीयते ।

१. वादिराजकृतं यशोधर्मचरितम् । अत्र चत्वारः सर्गाः, २९६ संख्याकानि च पद्यानि सन्ति ।

२. (११६० मितस्य ११७२ मितस्य च कालस्य मध्ये कृतं) हेमचन्द्रस्य त्रिषष्टि-शलाका-पुरुष-चरितम् । दश-पर्व-निबद्धे काव्येऽत्र जिन-धर्मानुयायिनां त्रिषष्टेः श्रेष्ठपुरुषाणां चरितानि निबद्धानि । तत्र २४ जिनाः, १२ चक्रवर्तिनः, ६ वासुदेवाः, ६ बलदेवाः, ६ विष्णुद्विषश्च सन्ति । बृहत्कायं मनः श्रान्तिकरं च सदपि काव्यम् इदं हेतु विशेषैः अध्येयम् अस्ति ॥

३. हरिचन्द्रस्य धर्मशर्माभ्युदयम् । अत्र एकविंशतिसर्गेषु पंच-दशस्य तीर्थकरस्य धर्मनाथस्य चरितम् उपवर्णितम् । कालोऽस्य अनिर्णीतचरः ॥

## (३५) 'ख्रीष्ट-षष्ठ-शतके संस्कृतस्य पुनरुज्जीवनम् अभूद्' इति वादः ।

India, What Can It Teach Us' (भारत, किंचैतद् नः शिक्षयि-तुम् अर्हति) इतिनामके स्वग्रंथे मैक्समूलरः ख्रीष्ट-षष्ठ-शतकमध्ये संस्कृतस्य

पुनरुज्जीवनम् अभूद्' इति वादम् उदभावयत, यः खलु विविधापत्तिदोषदुष्टोऽपि कतिपयवर्षाणि प्रचारम् आप ॥

'शकादिभिः वैदेशिकैः पुनः पुनः कृतानां भारताक्रमणानां हेतोः आद्ययोः द्वयोः ख्रीष्टशतकयोः संस्कृतस्य अध्ययनाध्यापने लोके विस्मृते' इति कल्पना-प्रसूतिः खलु वादोऽयम् अभवत् । वादे चाऽस्मिन् वक्ष्यमाणाः विप्रतिपत्तयः अप्रतिसमाधेयाः भवन्ति—

१. भारतस्य पञ्चमभागमात्रं खलु शकैः जितम् ।

२. स्वजितेषु देशोद्देशेषु अपि ते हिन्दु-धर्म-दीक्षिताः भूत्वा न केवलं हिन्दुनामानि अपितु संस्कृतभाषाम् अपि अगृह्णन् । उ ( ऋ ) षभदत्तो नाम तेषाम् अन्यतमो नृपः संस्कृत-प्राकृत मिश्रायां भाषायां स्वावदानानि शिलालेखे उत्कीर्णानि कारयांबभूव । कनिष्कोऽपि स्वयं बौद्धधर्मस्य महाभिभावकः किल बभूव ॥

३. 'शकनृपाश्रये एव मथुरायां भारतीयवास्तुकला समुन्नतिम् आप' इत्यत्र च नास्ति कोऽपि सन्देहः ॥

अथ आधुनिकैः अनुसन्धानैश्च वादोऽयं सर्वथा ध्वस्तो भवति । ग्रन्थस्य अस्य पाठकानां नैतद् अविदितं यद् अश्वघोषो नाम प्रथितयशाः बौद्धमहाकविः पण्डितमतल्लश्च ख्रीष्ट-प्रथम-शतके वर्तमानः आसीत्, तदा च अप्रत्यवस्थेयं संस्कृतगौरवं विलोक्यैव बौद्धधर्मप्रचारार्थं निबद्धाः स्वग्रंथाः तेन संस्कृते एव रचिताः । मैक्समूलरानन्तरं प्रकाशं गतौ ख्रीष्ट-द्वितीयशतकीयौ नासिक-गिरनार-शिलालेखौ अपि दुष्करकाव्यशैल्यां संस्कृतनिबद्धौ आख्यायिकाल्पकाव्य शैलीम् अनुहरन्तौ इव दृश्येते । तस्मात्—'तदानीन्तनाः नृपाः संस्कृतकाव्यात्यन्तरसिकाः आसन्, तदा च भूयिष्ठा संस्कृतकाव्यरचना अभूद्' इति फलितं भवति। वस्तुतस्तु सर्वासु क्रमेण अतीतासु शताब्दीषु निष्प्रत्यूहं संस्कृतकाव्यरचना अभवत् । ( ३५० तमे ख्रीष्टाब्दे रचितातः ) हरिषेणस्य समुद्रगुप्तप्रशस्तितः ज्ञायते यत् 'समुद्रगुप्तः परम-कवि-वत्सलः स्वयं च कविः आसीद्' इति । तस्य हि शिलालेखः अंशतः ( दण्डि-कालिदास-कृतिवत् ) वैदर्भ्यां रीत्याम् अंशतश्च दीर्घसमासबहुले गद्ये ( यत्र समास-विशेषे त्रिंशत्यधिकशताद् अपि अधिकाः वर्णाः सन्ति ) निबद्धोऽस्ति । तथा च, गुप्तवंश्यनृपकाले उत्कीर्णानि काव्यशैली निबद्धानि शिलालेखान्तराण्यपि मैक्समूलरानन्तरं गवेषकैः प्राप्तानि सन्ति । तदेतेन शिलालेखप्रमाणेन

'आपञ्चशतकात् न कदाचित्, विशिष्य च ख्रीष्टीयप्रथमशतकद्वये, संस्कृतं मूर्च्छाम् अवाप' इति सिध्यति ॥

अथ यद्यपि मैक्समूलरेण उक्तम् 'षष्ठशतकस्य मध्यतः संस्कृत-साहित्येतिहासे सुवर्णयुगं खलु बभूव' इति तस्य धारणा आसीत्। 'धारणा चैषा फर्गुसनमहाशयस्य वक्ष्यमाणं मतम् अनुलक्ष्य कृता अभवत्' इति तावत् प्रतिभाति। फर्गुसनमहाशयो हि एवं किल अमनुत— 'विक्रमादित्य-नामा कोऽपि उज्जयिनी-नृपः ५४४ मिते ख्रीष्टाब्दे शकान् विजित्य, भारताच्च तान् बहिष्कृत्य स्वविजयस्मारकं विक्रम संवत्सरं प्रवर्तयामास, तस्य च प्राचीनत्व-ख्यापनार्थं तस्य प्रारम्भं ६०० वर्षेभ्यः पूर्वं दर्शयामास।'[1]

अथ फ्लीट-महोदयकृतैः शिलालेखादिविषयकानुसन्धानैः निश्चीयते यत्— 'ख्रीष्टात् ७५ वर्षेभ्यः पूर्वं प्रवृत्तो यावदिदानीं व्यवह्रियमाणः [विक्रम-]सम्वत्सरः ५४४ तमख्रीष्टाब्दात् न्यूनातिन्यूनं शतवर्षपूर्वम् अपि व्यवह्रियते स्म; अपि च, ख्रीष्ट-पञ्चम-शतके एव अवन्तिं परितः मालवादिदेशानां गुप्तनृपैः विजित्य स्वाधिपत्ये स्थापनात् षष्ठशतके शकानां बहिष्करणात् तत्सारस्य संभाव-नैव न तावदासीत् इति। वस्तुतः हूणाः तावत् षष्ठशतक मध्ये पश्चिम-भारताद् बहिष्कृता बभूवुः। हूण-सूदनः परं यशोधर्मा विष्णुवर्धनः किल बभूव, न तु कोऽपि विक्रमादित्यः।

अथ 'विक्रमादित्यस्य सभायाः नवरत्नत्वेन प्रसिद्धैः कालिदासादिभिः कविभिः पण्डितैश्च षष्ठशतकमध्ये संस्कृतेन पुनः आहितप्राणेन भवितव्यम्' इति तावत् मैक्समूलरः उत्प्रैक्षत। अभिनवैस्तु अनुसंधान-प्रयत्नैः षष्ठ-शतक-मध्ये विक्रमादित्यस्यैव सत्ता सर्वथा निराक्रियते। युक्त्यन्तरैश्च ततोऽपि प्राचीनतरः कालः कालिदासस्य निश्चीयते। अन्यच्च, षष्ठ-शतके संस्कृतस्य ये लोक-प्रियता उन्नतिश्च इतिहासे दृश्यते ख्रीष्टपूर्वं प्रथमशतके तदधिके ते खलु बभूवतुः इत्यपि तावत् प्रमाणविशेषैः पर्यवसीयते॥

---

१. फर्गुसनमतप्रचारप्रारम्भतः एव विपश्चितः एतादृशसम्वत्सरप्रवर्तनविषये संदि-हानाः अवर्तन्त। नहि जगतः इतिहासे क्वचिद् एकोऽपि दृष्टान्तः अस्य उप-लभ्यते। अथ 'कथं तर्हि, ६०० वर्षेभ्यः पूर्वं ?' 'कुतो न ततोऽप्यधिकेभ्यो न्यूनेभ्यो वा वर्षेभ्यः पूर्वम् ?' इति प्रश्नः कथं समाधेयः ?

# अथ पञ्चमोऽध्याय

## खण्ड—(गीतिमाधुर्य) काव्यानि सुभाषितावल्यश्च।

## (३६) खण्डकाव्यसमारम्भः।

साधारणतः खण्डकाव्येतिहासः[1] कालिदासस्य ऋतुसंहार मेघदूताभ्याम् आरभ्यते। वस्तुतस्तु एवंकरणेन स सर्वोऽपि श्रेण्यसंस्कृतखण्ड काव्यानाम् आधारः उपेक्षितो भवति यस्य परम्परा ऋग्वेदकालम् अभिव्याप्य वितता वर्तते॥

भारतवर्षीय खण्डकाव्यं लक्षण कालयोः दृशा पञ्चधा विभाजयितुं शक्यते। तथाहि—

(१) ऋग्वेदकालस्य निःश्वसितं खण्डकाव्यं। एतद्धि काव्यं धार्मिक-लौकिकोभयवृत्तिप्रधानं दृश्यते। अत्र हि क्वचित् क्वचिद् वीररसविषयैः धार्मिकतांशाः सम्मिश्रिताः। यथा सुमनोहारिणि उषःसूक्ते, वीररसप्रधाने विपाशा-शुतुद्रीसूक्ते, वीररसमये सुदासविजयसूक्ते च। एतैः खण्डकाव्यानुकारैः सूक्तैः ऋषीणां ते निर्व्याजाः हृदयोद्गाराः गर्भी क्रियन्ते यांस्ते प्रायः प्रकृत्याः परोपकारिणीभिः शक्तिभिः सह अभेदसंसर्गम् अवाप्य उदीरयामासुः। एते च मन्त्राः सम्यग् विचितैः छन्दोभिः वद्धाः प्रायः सान्त्यानुप्रासाः गेयाश्च॥

(२) भीकरसमयं खण्डकाव्यम्। अस्य प्रकारस्य लक्ष्माणि बाहुल्येन वौद्धग्रन्थेषु उपनिषत्सु च उपलभ्यन्ते यत्र अभिनवधर्मे विज्ञाते जायमानो विस्मयः वहुधा सहसा खण्डकाव्यीयपद्यतया प्रस्फुटो बोभवीति॥

---

(१)—खण्डकाव्यान्तर्गतमेव कोषः इति उद्भटः, इति च अभिधीयमानं मुक्तक-काव्यमपि ज्ञेयम्। तस्य लक्षणन्तु—

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः।

राज्य-क्रमेणरचितः स एवातिमनोरमः।' इति साहित्यदर्पणे (६, ३२९-३३०) द्रष्टव्यम्॥

(३) ऐतिहासिकं ( Epic ) भावुकं ( Sentimental ) वा खण्ड-काव्यम् । अस्य भेदस्य उदाहरणानि प्रायेण रामायणे महाभारतेऽपि च मुहुर्मुहुः उपनिबध्यमानेषु प्रकृतिवर्णनेषु दृश्यन्ते ।

(४) रूपकसाहित्यान्तर्गतं विविक्तं शाङ्गारिकं खण्डकाव्यम् ।

रूपकेषु यत्र तत्र पात्राणां वस्तुवर्णनस्य च अनुरागस्य च पद्यमय्यः उक्तयः अस्य भेदस्य उदाहरणतां गच्छन्ति । तदेवं वक्ष्यमाणेन पञ्चमप्रभेदेन सह खण्डकाव्यस्य पञ्च प्रभेदाः साधारणतया भवन्ति । तेषु च पूर्वोक्तं द्वितीयं भक्तिरसमयं तृतीयम् ऐतिहासिकं च निम्नतमाम् भूमिम्, एष चतुर्थः मध्यमां भूमिम्, उत्तरकालिकैः अमरुकभर्तृहरिप्रभृतिभिः प्रतिनिर्धार्यमाणः वाङ्मय-स्य स्वतन्त्राङ्गतया स्थितः पञ्चमः प्रभेदश्च ऊर्ध्वतनीं भूमिम् अधिकरोति ॥

(५) उत्तरकालिककवीनां सङ्कीर्णं शाङ्गारिकं वा रहस्यमयं वा खण्ड-काव्यम् ।

अत्र हि प्रभेदे धर्मभावना कामवृत्त्या सङ्कीर्यते । अत्र च प्रणेतुः अनयोः उभयोः भावना-वृत्त्योः कतरा प्रधाना इति तावद् निश्चेतुं दुःशकम् । भक्तिरसमयेन ऐतिहासिकेन च खण्डकाव्येन अस्य प्रभेदस्य तुलनायां कृतायां यथा अत्र रतेः प्राधान्यं प्रकृत्याः अङ्गनानां च लावण्याऽऽलेखने अत्युक्ति-प्रयुक्तिः प्रेक्ष्यते न तथा पूर्वोक्तोभयत्र । अनेन खण्डकाव्यप्रभेदेन प्रणेतृणां महती प्रेक्षणशक्तिः गभीरानुभूतिश्च प्रमाणी क्रियते । अस्य प्रभेदस्य बहूनि पद्यानि वचोभङ्गी-वर्ण्यविषयोभयदृशा निरतिशयसौन्दर्यवन्ति रत्नानि सन्ति । एषु हि पद्येषु चातकचकोरचक्रवाक-प्रभृतिपक्षिणाम् अप्रस्तुतवर्णनेन मानवीय-रागादिनानाजीवनवृत्तयः निरूपिताः । सर्वत्र एतज्जातीयकेषु पद्येषु पशुपाद-पानां जगतो महद् गौरवं खल्वस्ति, अतिरमणीयं च तद्वर्णनं संदृश्यते । खण्डकाव्यं साहित्यस्य विविक्तां धाराम् अङ्गीकृत्य ये तत्प्रणयने प्रवृत्ताः बभूवुः केवलं ते उत्तरकालिकाः (Later) कवयः अध्यायेऽत्र अस्मद्-ध्यानगोचराः भविष्यन्ति ॥

## (३७) खण्डकाव्यकर्तारः ।

(१) शृङ्गारतिलकम् । कालिदासः[१] किल एतत्कर्ता इति प्रसिद्धं प्रमा-णन्तु न किमपि अत्र उपलभ्यते । अत्र केवलं त्रयोविंशतिः पद्यानि लभ्यन्ते । यत्सत्यं कतिचित् पद्यानि अस्य अतीव सहृदयहृदयहृद्यानि । यथा—

१—कालिदासस्य ऋतुसंहारमेघदूतखण्डकाव्ययोः परिचयस्तु एकोनविंशे खण्डे प्राप्तव्यः ॥

इयं व्याधायते बाला भ्रूरस्याः कार्मुकायते ।
कटाक्षाश्च शरायन्ते मनो मे हरिणायते' । इति ।

पुनश्च, पेशलतमैः उपादानैः अङ्गनाङ्गानि निर्माय विरञ्चिना किमिति तच्चित्तम् अश्मना विरचितम् इति विचिन्त्य खिद्यमानः सोपालम्भमिव कविः आह—

'इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैश्च विधाय वेधाः कान्ते ! कथं घटितवानुपलेन चेतः ?' इति

राक्षसकाव्यम् अपि कालिदासकृतम् इति किल श्रूयते, शृङ्गारतिलकाद् दूरतरम् अपकृष्यमाणं तु एतत् न खलु कालिदासप्रसूतित्वसम्मानम् अर्हति ॥

(२) **घटकर्परकाव्यम्** । घटकर्पराभिधेनैव कविना कृते काव्येऽत्र द्वाविंशतिः श्लोकाः सन्ति । एतत्प्रणेता च कविः विक्रमादित्यपरिषन्नवरत्नेषु अन्यतमत्वेन प्रसिद्धः । चरमे खलु श्लोके 'यदि कश्चिद् मां यमकनिबन्धने अतिशयीत घटकपाले अहं तदर्थं तोयम् आनयेयम्' इति सावलेपं लपति कविः । अत्र काव्ये मेघदूतविपरीतं प्रावृषि उपागतायां कयाचित् प्रोषितपतिकया मेघमुखेन स्वपतिं प्रति प्रेष्यमाणः सन्देशः वर्णितः कविना ॥

(३) **हालकृता सप्तशती** । हालाभिधस्य वा सातवाहनाख्यस्य वा कवेः कृतित्वेन लब्धप्रचारे काव्येऽत्र माहाराष्ट्रीप्राकृतनिबद्धाः सप्तशतसङ्ख्याकाः मुक्तकश्लोकाः सन्ति । कविः स्वयं श्लोकान् इमान् प्रणिनाय उत सञ्जग्राह इति तावद् निर्णेतुम् अशक्यम् । ख्रीष्टीयप्रारम्भकशतकेषु कचिद् असम्प्रधार्यमाणे काले किल अस्याः प्रणयनम् अभूत् । हर्षचरितामुखे बाणेन तु एषा अतीव उपस्तुता ॥

कृतकया अप्रमादम् अधीतया च भाषया निबद्धा सप्तशती न खलु सर्वजनकाव्यं भवितुमर्हति । अनेकविधाश्च प्रसङ्गाः अत्र वर्णिताः । तथाहि अत्र गोप-गोपालिका-व्याधिका-मालाकारिका-शिल्पिनीप्रभृतीनां नानाजीवनवृत्तीनां स्त्रीपुंसानां मनोहराणि वर्णनानि, शृङ्गाररसोद्दीपनतया स्वतन्त्रतया वा प्रकृत्याः विविधाङ्गानां वर्णचित्राणि, काश्चित्क्यः सूक्तयश्च दृक्पथम् अवतरन्ति । तथाहि काचिद् विरहिणी 'यैः करैस्त्वं दयितं मे स्पृष्टवान् तैरेव मामपि स्पृश' इति चन्द्रमसं प्रार्थयति, सा पुनः प्रभाते स्वप्रियप्रवासगमनं वारयितुम् 'अनन्ता खलु निशा स्याद्' इति कामयते । अथ पुनः कश्चित् तृषार्दितः पथिकः सलिलं नयन्तीं काञ्चन नवयौवनां विलोक्य

तां जलं प्रार्थयते । चिरं तन्मुखलावण्यपिपासुः सन् स यावत् तथा अञ्जलिं रचयति यथा अङ्गुलीरन्ध्रेभ्यः जलम् अधश्च्योतमानं भवेत् तावत् साऽपि तादृशाकाम्यावती सती क्रमात् क्षीयमाणां जलधारां तदञ्जलौ पातयति । वर्षावर्णनेषु मञ्जरीषु परिभ्रमतां भ्रमराणां वर्षया प्रनृत्यतां बर्हिणां म्लाङ्-क्षाणां, सतृष्णं स्वसहचरीः मृगयमाणानां मृगाणां शावानुगानां च वर्णनम् हठात् हृदयं हरते । नीतिसूक्तिषु 'कृपणस्य धनं तथा तस्य उपकाराय यथा तरस्य छाया पथिकान्तरस्य' इत्याद्यर्थकानि, 'बधिराः अन्धाश्च लोके धन्याः येषु हि प्रथमे अचारुशब्दान् न शृण्वन्ति अपरे च अवद्यमुखानि न पश्यन्ति' इत्याद्यर्थकानि च वचनानि उदाहरणतया कथनार्हाणि । क्वचित् क्वचिद् नाट्यवत् पेशलपरिस्थिति-निरूपणमपि दृश्यते । तथाहि, स्वप्रणयिनः वैद्यस्य गृहं जिगमिषन्ती काचित् परपतिका आत्मनः मिथ्यावृश्चिकदंशनं नाटयति ॥

**अनुकृतयः** । अस्याः अनुकृतिषु भूयिष्ठं प्रसिद्धा तावद् 'आर्यासप्तशती' नाम या खलु खीष्टद्वादशशतकस्य अपरभागे वङ्गक्षितिपति लक्ष्मणसेनस्य राजपरिषदम् अलङ्कुर्वता गोवर्धनेन प्रणीता । अत्र ग्रन्थे नानकेषु खण्डेषु विभक्ताः अकारादिक्रमेण उपस्थापिताः शृङ्गाररसप्रधानाः सप्तशतमुक्तकश्लोकाः सन्ति । अत्र अन्योक्त्याः प्रचुरत्वाद् अनुमीयते यद् अलङ्कारशास्त्रस्य ध्वनिसम्प्रदाये कवेः महती आस्था आसीद् इति । यथा शम्भुना ( ११०० खीष्टसम्वत्सरभवेन ) कृतायाम् अन्योक्तिमुक्तालतायां वीरेश्वरेण च ( यस्य आविर्भावकालः अविदितः ) कृते अन्योक्तिशतके तथा अत्रापि बहुशः शृङ्गाररसः गूढोक्त्या ( Indirectly ) व्यञ्जितः । भाषा अस्याः संस्कृतम् एव, परं काव्यगुणवत्तया एषा हालप्रणीतायाः सप्तशत्याः अपकृष्टा खलु ॥

अपरा च अस्याः अनुकृतिः हिन्दीभाषानिबद्धा आसन्नभूतकालप्रादुर्भूतस्य बिहारीलालाख्यस्य कवेः कृतिः बिहारीसतसई नाम । अत्र प्रायः शृङ्गाररसप्रधानाः उपसप्तशतमुक्तकदोहाः । अत्र नायकसम्बन्धेन नानादेशकालेषु नानाभावैः समभिव्यक्तानि नायिकानां नानारूपाणि निरूपितानि ॥

**(४) भर्तृहरिः** । खण्डकाव्य ( Lyrics ) प्रणेतृतया कालिदासाद् अनन्तरं पदं तावद् भर्तृहरेः एव । शृङ्गारशतक-नीतिशतक-वैराग्यशतक रचयिता खलु भर्तृहरिः इति तावत् लोके प्रसिद्धम् । अत्र शतकत्रय्यां

प्रथमे शतके शृङ्गाररसः, द्वितीये लोकव्यवहारः, तृतीये च शान्तरसः मुख्यः। अत्र प्रत्येकं शताद् अधिकः श्लोकाः उपलभ्यन्ते। सर्वे ते शतककृतैव कविना कृताः इति तावद् निश्चयेन वक्तुमशक्यम्। अत्रत्यानि कानिचित् पद्यानि शाकुन्तलायां, मुद्राराक्षसे तन्त्राख्यायिकायाञ्चापि उपलभ्यन्ते। कानिचिच्च सूक्तिसन्दर्भेषु अन्यान्यकविनाम्ना अपि सङ्गृहीतानि[1]। अथ तस्य नीतिवैराग्यशतकयोः अन्यकविकृताः अपि श्लोकाः सङ्गृहीताः सन्ति यदि, सन्तु नाम, शृङ्गारशतकं तु तस्यैव उर्वरधीप्रसूतिः इति खलु प्रतिभाति॥

**अथ कोऽयं भर्तृहरिः ?** अल्पिष्ठं खलु अस्य इतिवृत्तविषयकं विज्ञातम्। न च लोकवार्ताऽपि किञ्चिद्विशिष्टबोधनपरा अत्र। ननु कोऽयं भर्तृहरिः इति अपि तावद् अविसन्देहं न ज्ञायते। वाक्यपदीयप्रणेता भर्तृहरिः नाम कश्चिद् वैयाकरणः ६५१ तमे खीष्टाब्दे पञ्चत्वमाप इति, स किल असकृद् गृहत्यागिनाम् आनन्देन गृहमेधिनां सुखेन च कृतां दोलाम् अधिरुह्य प्रेङ्खोलनाम् अनुबभूव इति च तावद् इत्सिङ्नाम्नः चीनयात्रिणः लेखसाक्ष्येण ज्ञायते। एतत्साक्ष्यबलेन 'इत्सिङ्परिचायितः एष भर्तृहरिः एव एषां शतकानां प्रणेता सम्भाव्यते' इति मैक्समूलरमहाशयाः उट्टङ्कितवन्तः। न तु किमपि अत्र निर्विकल्पं कल्पयितुं शक्यम्, अमीषां शतकानां कर्तुः अबौद्धत्वे वैदान्तशैवत्वात्। नैतानि शतकानि इत्सिङा प्रेक्षितानि वा प्रेक्ष्यापि उपेक्षितानि वा इति उभयमपि खलु सम्भाव्यते॥

**शैली।** भर्तृहरेः श्लोकेषु प्रत्येकं लघुकाव्यायते तावन्तं च अर्थं बिभर्ति यावान् आङ्ग्लभाषायां चतुर्दशपादच्छन्दसे ( For Sonnet ) अलं स्यात्। न चैतद् अद्भुतं, संस्कृतभाषायां समासैः अर्थनिबन्धने अनन्यसाधारणशक्तेः दर्शनात्, भर्तृहरेश्चात्र सिद्धहस्तत्वात्। अस्य नीतिशतकं निधानं खलु औपदेशिकवचनानाम्। तथाहि, महापुरुषलक्षणं लक्षयन् स आह—

'विपदि धैर्यमथाभ्युदये क्षमा, सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम्।' इति।

वैराग्यशतके तु नितरां भिन्नेन स्वरेण प्रवचन्निव आह—

'आक्रान्तं मरणेन जन्म जरसा यात्युत्तमं यौवनं,
सन्तोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः।

---

१—न तु सूक्तिसन्दर्भाः परमं प्रमाणं तेषां मिथो विरोधात्॥

लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा ।' इति ।

अथ रतिपतेः परमां शक्तिं दृष्ट्वा प्रबोधयन् आह—

'कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा सञ्चर मनःपान्थ ! तत्रास्ते स्मरतस्करः ।' इति ।

अनेन बहुलं प्रयुक्तं वृत्तं तु शिखरिणी शार्दूलविक्रीडितं च ॥

**कालः** । वैयाकरणभर्तृहरेः अन्यः यद्येष भर्तृहरिः तर्हि न किञ्चिन् तस्य कालविषये निश्चयेन विदितम् । पुण्यश्लोकस्य महाराजविक्रमादित्यस्य भ्राता किल भर्तृहरिः बभूव इति लोकप्रवादः अपि तत्कालावधारणे सहायतां नोपयाति । भट्टिकाव्यकर्ता भट्टिः एव किल एष भर्तृहरिः इति वादस्तु नहि पर्याप्त प्रमाण पुष्टः ॥

**(५) अमरुः ( अमरुकः ) (ख्रीष्टसप्तमशतकभवः)** । अमरुः इति अमरुकः इति च लोके विश्रुतेन अनेन कविना कृते अमरुशतके काव्ये, यस्य शाखाचतुष्टयसंस्करणानि उपलभ्यन्ते, न्यूनतो न्यूना नवतिः अधिकतः अधिकाः पञ्चदशोत्तरशतं च श्लोकाः दृश्यन्ते । एषु केवलम् एकपञ्चाशन् श्लोकाः सर्वसाधारणाः सन्ति । भिन्नभिन्नसंस्करणेषु श्लोकानाम् आनुपूर्वी-भेदोऽपि महान् अवलोक्यते । सुभाषितसंग्रहेषु यानि यानि पद्यानि अमरुक-नाम्ना संगृहीतानि न तानि अमरुककाव्यस्य कस्मिंश्चिदपि संस्करणे विद्यन्ते । तस्मात् कतमेन तावत् संस्करणेन मूलकाव्यं यथावत् प्रतिनिधीयते इति सुवचं नास्ति । अर्जुनवर्मणा (१२१५ तमख्रीष्टाब्दसम्भवेन) टीकाकृता अङ्गीकृतः ग्रन्थः एव तावत् प्रकृतग्रन्थानन्तरवर्ती इति वै सम्भाव्यते ॥

**टीकाः** । कश्मीराधिपतिविशेषस्य मृतदेहे स्वजीवं प्रवेश्य तस्य अङ्ग-नानां शतेन कामविषयकः यः अनुभव शङ्करभगवत्पादेन उपार्जितः स एव अमरुककाव्ये शब्दनिबद्धः इति तावत् कतिपयपण्डितप्रत्ययगोचरः लोक-प्रवादः प्रथितः । टीकाकृता रविचन्द्रेण इमे श्लोकाः ब्रह्मज्ञानव्यङ्ग्यार्थक-तया व्याख्याताः। वेमभूपालेन ( १४ शताब्दीभवेन ) तावद् एषां व्याख्यानं नायिकाभेदवर्णनपरतया कृतम् । अन्यैश्च टीकाकृद्भिः नानाऽलङ्कारोदाहरण-तया एते गृहीताः । शृंगाररसस्य विविधानि शब्दचित्राणि ननु एते श्लोकाः इति एव आलोचनं तु अखण्डदृशा ( on The whole) यथार्थतरं स्याद् इति प्रतिभाति । रतिम् अङ्गनां च मनुष्यजीवनस्य उपादानविशेषौ मत्वा

भर्तृहरिणा तयोः सामान्यस्वरूपाणि वर्णितानि, अमरुकेण तु प्रणयिनोः अन्योन्यसम्बन्धाः एव स्वलेखनीशरव्यी कृताः इति एतयोः कव्योः वस्तुदर्शने भेदः सुदर्शः ॥

**शैली** । शैली अमरुकस्य तावद् वैदर्भी । तस्मान्न काव्येऽत्र क्लिष्टाः दीर्घाश्च समासाः । भाषा च अस्य सरला भङ्गिश्च भास्वरा । श्लोकेषु च अस्य पाठकचित्तचुम्बिनी चारुता चकास्ति । रतिविषयिणी दृष्टिश्च अस्य प्रसन्ना उदारा च । स्मितान्ताः प्रणयकलहाः अनेन वर्णिताः पाठकानां बलवत् प्रमोदकराः । सरसं सम्वादम् अपि रसत्रयम् अकृत्वा यथावत् परिपीड्य एकश्लोककरके एव समावेशयन्ती अस्य कवेः अनन्यसुलभा या योग्यता सा अदयमाणेन श्लोकेन निपुणं निदर्श्यते ।

"बाले ! नाथ ! विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतम् ?,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा ?, कस्याऽग्रतो रुद्यते ?,
नन्वेतन्मम, का तवाऽस्मि ?, दयिता, नास्मीत्यतो रुद्यते ॥"

अस्य वल्लभतरं वृत्तं शार्दूलविक्रीडितम् ॥

**समयः** । (१) (८५० ख्रीष्टाब्दकालिकः) आनन्दवर्धनः अमरुकस्य महतीं कीर्तिम् अनुकीर्तयति । (२) (८०० ख्रीष्टाब्दकालिकेन) वामनेन अमरुकस्य पद्यत्रयी समुद्धृता । अतोऽधिके अस्य कालविषये वक्तुमशक्येऽपि 'ख्रीष्टस्य प्रायः सप्तमशतकभवः एषः' इति वचनं नानृतं स्यात् ॥

**(६) मयूरः ( सप्तमशतकभवः )** । हर्षवर्धनराजपरिषदाभरणस्य बाणभट्टस्य श्वशुरः किल मयूरो बभूव इति तावत् प्रसिद्धम् । अस्य सूर्यस्तुतिपरं सूर्यशतकं निरूढिमागतम् । स्वदुहितुः लावण्यमयानि अंगानि सूक्ष्मेक्षिकया वर्णयन् मयूरः कुपितया तया शप्तः कुष्ठी बभूव । अथ सूर्यस्तवं विधाय महता कृच्छ्रेण असौ कुष्ठाद् मुक्तिम् आप इति किल अस्य शतकस्य प्रभवहेतुं प्रकाशयन्ती प्रमाणान्तरेण पुष्टिम् अपेक्षमाणा काचित् किंवदन्ती आकर्ण्यते ॥

**(७) मातङ्गदिवाकरः (सप्तमशतकजः)** । मयूर-भर्तृहरिसमकालिकस्य स्वकाले एव सुप्रथितयशसः अस्य कतिचिदेव पद्यानि तावद् उपलभ्यमानानि सन्ति ॥

(८) **मोहमुद्गरः** । निष्पन्नार्थं शङ्कराचार्यकृतितया लब्धप्रचारस्य शैल्यादिसाम्यरूपप्रतिपाद्यार्थाभ्यां च भर्तृहरेः वैराग्यशतकेन साम्यं बिभ्रतः अस्य कियन्ति पद्यानि परमार्थेन श्लाघ्यानि ॥

(९) **शिह्लणकृतं शान्तिशतकम्** । अनिश्चीयमान कालमानेऽपि काव्येऽत्र बौद्धमनोवृत्तयः काश्चन लक्ष्यन्ते । काव्यगुणैः भर्तृहरेः शतकाद् अपकृष्यमाणमपि, अनतिलोकप्रसिद्धमपि च एतद् अनुभूतिगाम्भीर्येण भर्तृहरिशतकमतिशेते खलु ॥

(१०) **बिह्लणकृता चौरपञ्चाशिका [ ११ शतकम् ]** । अस्य काव्यस्य 'चौरपञ्चाशिका' इति नाम्नः 'स्तेनकृतानि पञ्चाशत् पद्यानि' इति, 'गुप्तप्रणयपराणि पञ्चाशत् पद्यानि' इति, 'चौराभिधकविकृतानि पञ्चाशत् पद्यानि' इति च नानाऽर्थाः गृह्यन्ते । कतिचिद्धस्ताङ्कितपुस्तकेषु कवेः बिह्लणनाम्नैव स्मर्यमाणत्वाद् विक्रमाङ्कदेवचरितकाव्यप्रसिद्धप्रणेता[1] बिह्लणः एव एतत्कर्ता इति निश्चीयते । चौरपञ्चाशिकायाः काश्मीरिकं दाक्षिणभारतीयं च इति यत् संस्करणद्वयम् उपलभ्यते न तत्र उभयत्र तस्याः राजतनूजायाः वर्णने विवरणानां सावर्ण्यं निर्वर्ण्यते यस्यां किल बिह्लणस्य अनुरागः अनुश्रुतिभिः श्रूयते । यदि हि नाम बिह्लणेन काव्येऽत्र नृपविशेषसुतागतः कस्यचिद् लुण्टाकराजस्य रागः आलिखितः स्याद् ॥

अत्र सम्भोगशृङ्गारस्य सम्भोगानन्तरवर्तीनि स्मृत्यादिरूपाणि पुरुरूपाणि मनोहारिणा सर्वाङ्गीणविस्तरेण वर्णितानि । भङ्गिश्च सर्वत्र वर्ण्यार्थानुरूपा सुरूपा च । विपुलं च प्रकाशितभाववैविध्यं दृश्यते । अत्र अद्यापीति पदं मुखे निधाय प्रारब्धम् एकैकं पद्यं तीव्रानुभूतिं गम्भीरसंवित्ति (emotion) च अभिव्यनक्ति । यथा,

'अद्यापि तां प्रणयिनीं मृगशावकाक्षीं, पीयूषवर्णकुचकुम्भयुगं वहन्तीम् ।
पश्याम्यहं यदि पुनर्दिवसावसाने, स्वर्गापवर्गवरराज्यसुखं त्यजामि ॥'
इति ।

इह वृत्तं च प्रधानं वसन्ततिलकम् ॥

(११) **जयदेवः** । जयदेवः वङ्गभूजानेः लक्ष्मणसेनस्य सदसि रत्नपञ्चकेऽन्यतमं रत्नं बभूव । तस्य गीतगोविन्दः नाम काव्यं संस्कृते उत्तम-

1—विक्रमाङ्कदेवचरितपरिचयस्तु ४२ तमे खण्डे लभ्यः ॥

काव्यश्रेण्यां गण्यते । लोकप्रियतायां गीतगोविन्दात् अतिरिच्यमानं खण्ड-काव्यान्तरं दृक्पथं नावतरति। तत्सम्मानमुद्दिश्य च जन्माभिग्रामे तज्जन्मदिवस-राजे प्रतिवर्षं गीतगोविन्दगीतगानप्रथा अनेकशतवर्षाणि अवर्तिष्ट। कवि-राजेत्युपपदेन यदसौ स्वनामधेयं विशिनष्टि तत् परमार्थेनैव एष कविराजः। सरविलियमजोन्समहाशयेन प्रस्तुतम् अस्य काव्यस्य विकृतमपि रूपान्तरं प्रेक्ष्य उच्चैः तत्स्तवं गायन् गेटे ( Goethe ) महाकविः "अशक्यभाषान्त-रानुवादत्वं यदि श्रेष्ठकाव्यप्रमाणं तर्हि गीतगोविन्दस्य तथात्वे न कश्चित् सन्देहः" इत्याह स्म[1] ॥

**बाह्याकृतिः** । अथ बाह्याकृतौ किंप्रकारकं काव्यमिदम् इति अनुयोगे विविधानि प्रतिवचनानि प्राप्यन्ते । तथाहि खण्डकाव्य (Lyric)–नाटकम् इति एके[2], मधुरनाटकम् (Melodrama) इत्यन्ये[3], परिष्कृतयात्रा इत्यपरे[4], पशुपालजनीननाटकम् (Pastoral drama) इतीतरे[5], सङ्गीत-नाटकान्तरालवर्तिनी ( between song and drama ) रचना इति केचित्[6] । सर्गेषु, न तु अङ्केषु, विभज्यमानतया काव्यं खलु इदम् इति तु समुचितं प्रतिभाति। अत्रत्यगीतिकानां पर्वसु देवालयेषु गातुम् अभिप्रेत-त्वात् तत्र तत्र राग–तालनामनिर्देशोऽपि युक्तः एव । वस्तुतस्तु अद्भुतकवि-प्रतिभावतो जयदेवस्य उपज्ञा एषा अभिनवः एव कश्चित् काव्यप्रकारः । उच्चारणीयाः पाठाः, गीतिकाः, कथाः, वर्णनानि, भाषितानि चेति सर्वाणि महता चातुर्येण साभिप्रायं मिथः अनुस्यूतानि ॥

**वर्णितार्थाः** । चतुर्विंशति प्रबन्धनामभागेषु विभक्ताः काव्येऽत्र द्वादश सर्गाः प्रतिप्रबन्धं च अष्टपदानि गीतानि सन्ति । पात्राणि तु अत्र कृष्णः राधा राधासखी च सन्ति । अभिलाषेर्ष्या प्रत्याशा नैराश्य मान मानोपशम समागमप्रभृतयः भारतीयानुरागस्य, पूर्णनैराश्यं चरमविप्रयोगं च

---

१—ए. बी. कीथकृतस्य 'ए हिस्टरी आव् संस्कृतलिटरेचर' नामकग्रन्थस्य (१९२८ खीष्टाब्दसंस्करणस्य) १९९ तमं पृष्ठम् ॥

२—यथा लैसन-( Lassen ) महाशयः ॥

३—यथा पिशल-( Pischel ) महाशयः ॥

४—यथा वान् श्राडर-( Von Schroeder ) महाशयः ॥

५—यथा जोन्स-( Jones ) महाशयः ॥

६—यथा लेवि-( Levi )-महाशयः ॥

वर्जयित्वा, नानावृत्ताः अत्र सुविस्तृतं सुविपुलं च वर्णिताः । अत्रत्यं चित्रं शृङ्गाररसवर्णनं विलोकयितुः 'कामशास्त्रमेव कविना नूनं काव्यतया परिणमितम्' इति भाति । यतः शृङ्गाररसोद्दीपनौ आलम्बनविभावेन समं प्रकृतिसुन्दरी अपि उद्दीपनतया विशिष्य सहकारकार्यं करोति तस्माद् वसन्त-ज्योत्स्ना-सुरभिसमीरादीनामपि इह चित्तचमत्कारि वर्णनं समुपलभ्यते । एवंविधे हि काले विदग्धानामपि मनांसि यदि मनोभवेन बलवद् अभिभूतानि स्युः, किमद्भुतं तर्हि ॥

**व्यङ्ग्यार्थानुसन्धानम् ।** कश्चिद् गूढः व्यङ्ग्यार्थोऽत्र वस्तुतया विवक्षितः न तु वाच्यार्थः इति प्रकल्प्य केचित्तु कृष्णेन जीवात्मा गोपीकेलिभिः आ विवेकोत्पत्तेः जीवात्मबन्धकारणं नानारूपं मायाजालं राधया च परमानन्दः आक्षिप्यते इति अभिधेयार्थान्तर्हितं प्रतीयमानार्थं सम्पश्यन्ति । परं कृष्णः कवेः दृढभक्तिमयोपासना विषयः आसीद् इति तु तावद् अप्रत्याख्येयमेव प्रतिभाति ॥

**शैली ।** शैली अस्य वैदर्भीरीतिशालिनी । अत्र क्वचित् क्वचित् सत्सु अपि दीर्घसमासेषु क्लिष्टार्थतादोषो न विद्यते । लोकदर्वसु गातुमिष्टत्वाद् एषां गीतानाम् असौ आत्मनः महोर्वरप्रतिभाबलेन अभिनवमेव कंचन काव्यप्रकारम् उद्भावयाञ्चकार । एषु गीतेषु काऽपि अद्भुतैव सरलता मधुरता च विद्यते । यथा सङ्गीतमयललितपदन्यासेन तथैव मनोरमरचनागुणेन अपि अस्य शैली अप्रतियोगिनी । कदाचिद् द्रुतप्रवाहैः लघुपदैः कदाचिच्च सन्तुलितगतिकैः कृतहस्तरचितदीर्घसमासैः स्वैरं वाचश्श्रोतृमनसां वशयित्री विचित्रा योग्यता खलु जयदेवे दृश्यते । विविधविधच्छन्दःप्रयोगे इव मृदुलशब्दालङ्कारविधानेऽपि, विशिष्य चरणान्त्यचरणमध्यगानुप्रासयमकविधानेऽपि, च एष सुतरां कृतहस्ततरः । यथा,

हरिरभिसरति वहति मधुपवने,
किमपरमधिकसुखं सखि ! भवने ।' इत्यादिषु ॥

चरणान्त्यशब्दसाम्यमवलोक्य केचिद् 'जयदेवस्य गीतगोविन्दस्य आदर्शेन केनचिद् अपभ्रंशकाव्येन भवितव्यम्' इति यद् उदटङ्कयन्, तन्न; चरणान्त्यशब्दसाम्यस्य चिरन्तनात् कालात् संस्कृतेऽपि अन्त्यानुप्रासत्वेन सुप्रतीतत्वात् । अस्य कवेः वर्णितं न केवलं मनुष्यरागेण समवेतं प्रकृतिसौन्दर्यमेव अपि तु भावानुरूपवर्णनिर्धारणमपि तथाविधं यथा अस्य

काव्यम् अविषयः खलु भाषान्तरविधानस्य । तथाहि, राधा ब्रवीति—

'कथितसमयेऽपि हरिरहह न ययौ वनम्,
मम विफलमिदममलरूपमपि यौवनम् ॥
यामि हे कमिह शरणं सखीजनवचनवञ्चिता,
मम मरणमेव वरमिति वितथकेतना,
किमिति विषहामि विरहानलमचेतना ॥ यामि हे......,

अथ कालिन्दीकूलवर्तिनं कुञ्जमलङ्कुर्वन् माधवो वक्ति—

'मामियं चलिता विलोक्य वृतं वधूनिचयेन
सापराधतया मयाऽपि न वारिताऽतिभयेन ।
हरि हरि हतादरतया गता सा कुपितेव ।
किं करिष्यति किं वदिष्यति सा चिरं विरहेण
किं धनेन जनेन किं मम जीवितेन गृहेण ॥ हरि हरि......'

गीतगोविन्दस्य बह्व्यष्टीकाः अनुकृतयश्च आलोक्यन्ते[1] ।

(१२) शीलाभट्टारिका । सुभाषितसङ्ग्रहग्रन्थेषु कृतोल्लेखाः सन्ति कतिपये अन्येऽपि खण्डकाव्यकवयः, परम् इह वस्तुतः कतिपयरमणीयपद्यविधात्र्याः शीलाभट्टारिकायाः एव नामोद्देशपूर्वं पद्यमेकम् उदाहरणतया अवतार्यते—

'दूति ! त्वं तरुणी, युवा स चपलः, श्यामास्तमोभिर्दिशः,
सन्देशस्सरहस्य, एष विपिने सङ्केतकावासकः ।
भूयो भूय इमे वसन्तमरुतश्चेतो नयन्त्यन्यथा
गच्छ, क्षेमसमागमाय निपुणं रक्षन्तु ते देवताः' । इति ।

अस्याः भाषा खलु सरला शैली च विच्छित्तिशालिनी । वृत्तं च प्रियतरम् अस्याः शार्दूलविक्रीडितम् ॥

## ३८ (क) सदुक्ति–सन्दर्भाः ।

यत्र नानाकवीनां सत्पद्यानि एकत्र सङ्गृहीतानि स खलु सदुक्तिसन्दर्भो नाम । वयसा ते न खलु अन्यप्राचीनग्रन्थगणनासु पदमर्हन्ति, अथापि तेषु भूयिष्ठानि प्राचीनपद्यानि सुरक्षितानि । तथाहि येषां खण्डकाव्यप्रणेतॄणां नीतिकाव्यकर्तॄणां च लोके नामानि केवलं श्रूयन्ते तेषां काव्योदा-

---

१—शिष्य (सिक्ख)—सम्प्रदायस्य आदिग्रन्थनाम्नि धर्मग्रन्थे सुरक्षिता जयदेवस्य अन्या गुणवती कृतिः हिन्दीभाषानिबद्धा 'हरिगोविन्द'—प्रशस्तिः ॥

हरणानि एषु लोचनगोचरी भवन्ति । परम् एकस्मिन् सदुक्तिसन्दर्भे यत्पद्यम् यस्य कवेः नाम्ना समुद्धृतं तदेव इतरत्र तदन्यस्य कवेः नाम्ना इति तेषां मिथो विरोधात् न तेषु विश्वासः कर्तुमुचितः कर्तृनामविरोधश्च अयं द्योतयति यद् 'अमीषां पद्यसङ्ग्रहाणां काचिद् यथार्था दृढपरम्परा नैवासीत् तेषां सङ्ग्रहीतारश्च महायासेन तत्सङ्ग्रहम् अकार्षुः' इति । संस्कृतस्य बहूनां सदुक्तिसन्दर्भाणां मध्यात् केवलं प्रधानतमाः अत्र परिचाय्यन्ते ।

(१) **कवीन्द्रवचनसमुच्चयः** । अद्यावधि प्रकाशम् आगतेषु सदुक्तिसन्दर्भेषु एष खलु प्राचीनतमः । एष च ख्रीष्टद्वादशशतकस्य नेपालीयहस्ताङ्कितं ग्रन्थम् मूलीकृत्य डा. ऐफ. डब्ल्यू. टामसमहाशयेन सम्पादितोऽस्ति । अत्र नानाकवीनां ५२५ श्लोकाः सङ्गृहीताः, न च एषु कविषु एकोऽपि १००० ख्रीष्टसम्वत्सराद् अर्वाक्कालभवः ॥

(२) **सदुक्तिकर्णामृतम् ( अथवा सूक्तिकर्णामृतम् )** । वङ्गनरेशलक्ष्मणसेनस्य सेवकेषु अन्यतमः श्रीधरदासः १२०५ तमे ख्रीष्टाब्दे इदं सञ्जग्राह । अत्र प्रायेण वङ्गीयानामेव ४४६ सङ्ख्याकेभ्योऽपि अधिकानां कवीनां पद्यानि प्रगुम्फितानि ॥

(३) **सुभाषितमुक्तावली** । त्रयोदशशताब्दीभवः जल्हणो नाम कविः किल अस्याः जनकः[1] । अत्र श्लोकाः यथाविषयं विभज्य स्थापिताः । कवीन् काव्यञ्च अधिकृत्य प्रस्तुतम् अस्याः प्रकरणम् अनेककविविषये नानाज्ञातव्यज्ञापकत्वाद् विशेषतः पाठकान् उपकरोति ॥

(४) **शार्ङ्गधरपद्धतिः** । १३६३ तमे ख्रीष्टवर्षे शार्ङ्गधरः एतां सम्पादयामास । अत्र १६३ भागेषु विभक्ताः ४६८९ श्लोकाः, येषु कतिपये स्वयं शार्ङ्गधरस्यैव । मुख्यतमः खल्वेष सर्वेषु सूक्तिसङ्ग्रहग्रन्थेषु ॥

(५) **सुभाषितावली** । पञ्चदशशतकभवेन वल्लभदेवेन सम्पादितायाम् अस्यां १०१ भागेषु विभक्ताः ३५० सङ्ख्यामपि अतिक्रामतां कवीनां ३५२७ श्लोकाः वर्तन्ते कल्हणस्य अपूर्णायाः राजतरङ्गिण्याः लेखनकार्यम् अग्रे नेतुः जोनराजस्य पुत्रेण वा शिष्येण वा श्रीवरेण सम्पादिता एका अपराऽपि

---

१—केषाञ्चिन्मतेन तु वैद्यभानुपण्डितः १२५७ तमे वर्षे जह्लणस्य कृते एताम् अग्रथ्नात् । वीक्ष्यतां मद्राससूचीग्रन्थ (Catalogue) विंशोऽध्यायः, ८११४ सङ्ख्याङ्कितः कविः ॥

सुभाषितावली तावत् प्रसिद्धा । खीष्टस्य पञ्चदशशतके एव लब्धोद्भवायाम् अस्यां अति ३८० सङ्ख्याकानां कवीनां श्लोकाः सङ्गृहीताः ॥

# ३८ (ख) नीतिकाव्यम् ।

संस्कृतस्य नीतिकाव्याख्यक्षेत्रे पर्याप्तं प्रमाणं प्राप्यते । प्राचीनतमनीतिकाव्यस्य सद्भावस्तु ऋग्वेदे किल विद्यते । तदनन्तरम् ऐतरेयब्राह्मणगते शुनःशेपोपाख्याने अस्य अनेकानि निदर्शनानि दृश्यन्ते । नीतिकाव्यसरूपाणि नानावचनानि उपनिषत्-सूत्रग्रन्थ-राजधर्मशास्त्र-महाभारतादिषु तेषु तेषु बहुषु ग्रन्थेषु लभ्यन्ते । पातञ्जलव्याकरणाद् ज्ञायते यद् विशालं नीतिकाव्य साहित्यं पतञ्जलिना अनुशीलितं खलु आसीद् इति । सिंह-रासभ-मार्जार-मूषिक-प्रभृतिभिः उच्यमानत्वाद् विलक्षणतया भासमानानाम् एतादृशां नीतिवचनानां महान् राशिः पञ्चतन्त्र हितोपदेशयोश्च समूढः । 'नीतिकाव्येषु भर्तृहरिनीतिशतकम् अत्यन्तं गौरवास्पदम्' इति, 'सूक्तिसन्दर्भेषु सहस्राणि नीतिवचनानि' इति च अभिहितचरम् । अथ कतिपयान्यनीतिकाव्यानां परिचयः अधस्तात् प्रदीयते ॥

(१) **चाणक्यनीतिशास्त्रम्** । एतत् खलु राजनीति समुच्चय-चाणक्यराजनीति-वृद्धचाणक्यादि-नानाऽभिख्याभिः अभिख्यातम् । चन्द्रगुप्तामात्यस्य (अर्थशास्त्रकर्तृतयाऽपि प्रसिद्धस्य) चाणक्यस्य कृतिः एषा इति श्रूयते किल । प्रमाणं तु अत्र किञ्चिद् नोपलभ्यते । विभिन्नपाठाढ्यानि अस्य नानाशाखासंस्करणानि प्रचरितानि । तथा च, एकस्मिन् संस्करणे तुल्यपरिणाहेषु सप्तदशभागेषु विभक्ताः ३४० श्लोकाः, भोजराजनाम्ना प्रसिद्धे अपरे च अष्टसु अध्यायेषु ५७६ श्लोकाः सन्ति । अत्र सकलोऽपि खलु लोकः नीतिवाक्यविषयी कृतो दृश्यते । यथा,

'सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः ।
सकृत् कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ।' इति ।

शैली अस्य सरला, छन्दश्च मुख्यतः अनुष्टुप् ॥

(२) वररुचिनाम्ना प्रतीतं **नीतिरत्नं**, (३) घटकर्परनाम्ना प्रसिद्धः **नीतिसारः**, (४) वेतालभट्टनाम्ना विश्रुतः **नीतिप्रदीपश्च** लघुश्रेणिकानि नीतिकाव्यानि सन्ति येषां प्रणयनकालोऽनिश्चितः, पद्यानि च कतिपयानि येषां मनोहराणि ॥

(५) समयमातृका, (६) चारुचर्या, (७) कलाविलासश्च इत्येतानि त्रीणि एकादशशतकभवस्य महाग्रन्थकारस्य क्षेमेन्द्रस्य कृतित्वेन प्रसिद्धानि। एतैश्च क्षेमेन्द्रस्य कृतित्वं (skill) यथा द्योत्यते न तथा तदीयैः रचनान्तरैः॥

ग्रन्थकारान्तरप्रणीतानि यानि नीति काव्यान्तराणि, तेषां स्वल्पमहिम-शालितया न तानि इह उल्लिखामः॥

# अथ षष्ठोऽध्यायः

## (३६) कौटल्यकृतम् अर्थशास्त्रम्[1] ।

**(१) अर्थशास्त्रस्य महत्त्वम् ।** दक्षिणापथेन संस्कृत साहित्याय यद् यद् दत्त[2] तत्र कौटल्यकृतम् अर्थशास्त्रं निरतिशयगौरवं खलु अस्ति । एतदुपलब्धिकालाद् भारतस्य प्राचीन संस्कृति (Culture) सभ्यताविषयकम् अस्मज्ज्ञानं प्रायः रूपान्तरं प्राप्नोत् । एतत्प्राप्तेः प्राग् यूरोपीयाः 'राजधर्मज्ञानशून्याः खलु भारतीयाः अभवन्' इति मन्यन्ते स्म । प्रायश्च पाश्चात्य विपश्चितां 'चिन्तन शूराः उद्यमकातराः खलु भारतीयाः' इति मतम् आसीत् । कौटल्यस्य अर्थशास्त्रे न केवलं शासनसिद्धान्ताः एव अपि तु प्रबन्धपद्धतयोऽपि विस्तरेण वर्णिताः । अस्य वर्ण्यविषयेषु हि विविधानि राजकर्त्तव्यानि, ग्रामरचनाः, कृषि-भू-वाणिज्यसम्बद्धाः विचाराः, अर्थकरीकलानां ललितकलानां सुरासवनस्य (Excise), वनानां खनीनां च उन्नयनोपायाः, नानादण्डप्रकाराः, विविधाः भूषेचन (Irrigation) विधयः, नानादुर्भिक्षरूपाणि चेति बहवो विषयाः सन्ति । उपदेश्य-व्यवहार्यत्वयोः कोऽपि अन्योन्यानुरूपः संयोगः अत्र दृश्यते, एष एव अस्य महान् विशेषः । तस्मात् संस्कृतसाहित्ये वर्तमानः अस्य ग्रन्थस्य महिमा ग्रीकसाहित्ये वर्तमानं अरिस्टाटल—प्लेटो—ग्रन्थानां महिमानं भृशम् अतिशेते ॥

### (२) कर्त्ता ।

(क) अथ को नु अस्य ग्रन्थस्य प्रणेता इति जिज्ञासायां दिष्ट्या ग्रन्थान्तेऽयं श्लोकः पठ्यते—

---

१. अयं च निबन्धः अखिलभारतीय प्राच्य सम्मेलनस्य (All-India Oriental Conference) मुंबई नगरभूते पञ्चदशेऽधिवेशने स्वीकृतः पठितश्चासीत् ॥

२. त्रयोदशनाटकचक्रकर्त्ता भासः, प्रसिद्धभामहालङ्कारग्रन्थप्रणेता भामहः, अवन्तिसुन्दरीकथायाश्च रचयिता अपि दाक्षिणात्यः किल बभूव । एवमन्येऽपि अनेके दाक्षिणात्य कृतिकाराः स्वकृतिभिः संस्कृतसाहित्यनिधिं समवर्धयन् ॥

'येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ।' इति ॥

पुनश्च तत्रैव '........स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यञ्च' इति अधीयते । एवमेव 'कौटिल्येन कृतं शास्त्रं विमुच्य ग्रन्थविस्तरम्' (१,१) इति, 'कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः' (२, १०) इति च नाना उल्लेखाः कर्तृविषयकाः स्वयं ग्रन्थान्तराले लभ्यन्ते । यः विष्णुगुप्तः स एव कौटिल्यः इत्यपि च एतैः उल्लेखैः स्पष्टो भवति ॥

(ख) वाङ्मयम् अधिकृत्य इदं तावद् अवधेयतां गच्छन्ति—

(१) अर्थशास्त्रं सङ्क्षिपन् कामन्दकः स्वनीतिशास्त्रस्य (कामन्दकीय-नीतिशास्त्रस्य) आमुखे विष्णुगुप्तं स्तौति ॥

(२) दशकुमारचरिते अष्टमोच्छ्वासे दण्डिना भणितम्—

'इयमिदानीम् आचार्य विष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः सङ्क्षिप्ता' इति ॥

अन्यच्च, नृपाणां दैनिकीं चर्याम् उपनिबध्नता दण्डिना कतिपयानि स्थलानि अर्थशास्त्राद् अक्षरशः गृहीतानि । दशकुमारचरिते सोमदत्तवृत्तान्ते च 'कौटिल्य-कामन्दकीयादिनीति पटलकौशलम्' इति वदता दण्डिना पुनः कौटिल्योल्लेखः कृतः ॥

(३) जैनानां नन्दिसूत्रेषु, पञ्चतन्त्रे, सोमदेवकृते नीतिवाक्यामृते कालिदास कृतीनाम् उपरि मल्लिनाथटीकासु च चाणक्यकृतार्थशास्त्रस्य उल्लेखाः लभ्यन्ते ॥

(४) वक्ष्यमाणैः प्रमाणैश्च कौटिल्यस्य चन्द्रगुप्तमौर्येण सह सम्बन्धः सिध्यति—

(क) नवैव तान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति ।
........कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति ॥

इति विष्णुपुराणे ॥

नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति ।
स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥

इति भागवतपुराणे ॥

एतादृशान्येव वचनानि तावद् वायौ मत्स्ये ब्रह्माण्डे च उपलभ्यन्ते ॥

(ख) पुराणेषु चाणक्यविषये यदुक्तं तदेव जैनबौद्धसाहित्ययोः बहुत्र उपलभ्यमानैः उल्लेखैः समर्थ्यते[1] ॥

(ग) मुद्राराक्षसे हि नव नन्दान् घातयित्वा चन्द्रगुप्तराज्यं स्थिरयितुं चाणक्यकृतः प्रयत्नः विषयीकृतः ॥

(५) अभिधानचिन्तामणिगतेन—

'वात्स्यायनो मल्लनागः कुटिलश्चणकात्मजः ।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः ॥'

इति पद्येन ज्ञायते यच्चाणक्यः नानासंज्ञाभिः प्रसिद्धो बभूव इति । आसु संज्ञासु च विष्णुगुप्तः इति तस्य मुख्यं नामधेयं, चाणक्य इति चणकस्य अपत्यत्वद्योतकं विशेषणं, कौटल्यः इति कुटलगोत्रसूचकं विशेषणं, कौटिल्यः इति च कुटिलनीति मत्त्वपिशुनं विशेषणं भाति ॥

(६) एक पुरुष कृतित्वम् अर्थशास्त्रस्य । स्वयम् अर्थशास्त्रे द्विसप्ततिकृत्वः 'इति चाणक्यः' 'नेति चाणक्यः' इत्येतादृशानि यानि वाक्यानि अधीयन्ते तानि आदाय अध्यापकप्रवर हिलब्रैंट ( Hillebrandt ) महाशयेन अर्थशास्त्रस्य एकपुरुषकर्तृत्वं, विशिष्य चाणक्यकृतित्वम् एव, संशयितम् । तन्मतेन हि समानसम्प्रदायानुयायिभिः अनेककर्तृभिः अर्थशास्त्रं प्रणायि । नहि 'इति यास्कः' 'इति पतञ्जलिः' इत्येवंविधानि वाक्यानि निरुक्ते महाभाष्ये च आसाद्यन्ते ।

हिलब्रैंटमतं प्रत्यवतिष्ठमानः अध्यापकप्रवर जैकोबिस्तु नानककबीरतुलसीदासादयोऽनेके कवयः अन्येग्रन्थकाराश्च विनयदर्शनार्थम् एवं स्वनामोपन्यासं चक्रुः इति मन्यते । अथ अर्थशास्त्रेण स्वसम्प्रदायः प्रवर्तितः न तु तत्सम्प्रदायेन अर्थशास्त्रम् इत्यस्य साधकानि नाना प्रमाणानि लभ्यन्ते । तथा हि—

(१) कामन्दकः अर्थशास्त्रकर्तुः एकपुरुषस्य नामधेयं स्मरति, तथाविधसम्प्रदायं च न क्वापि उल्लिखति ॥

(२) 'पृथिव्या लाभे पालने च यावन्ति अर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्य एकमिदमर्थशास्त्रं कृतम्' इति ग्रन्थादौ

---

१—जैनग्रन्थेषु स्थविरावलीचरितं, नन्दिसूत्रम्, ऋषिमण्डलप्रकरणवृत्तिश्च अत्र उल्लेखमर्हन्ति । बौद्धग्रन्थेषु तु विनयपिटकोपरि बुद्धघोषकृता समन्तपशादिका नाम टीका च, महावंशटीका च इति द्वौ अत्र उल्लेखनीयौ स्तः ॥

एकोद्देश्यकत्वं ग्रन्थस्य तेन यदुक्तं तत् सर्वत्र ग्रन्थे नैकस्मिन् अपि स्थले व्याघातदोषो दृश्यते ॥

(३) यदि हि चाणक्यपरकालभवः कश्चिद् अस्य प्रणेता स्यात् तर्हि 'इति चाणक्यः' 'नेति चाणक्यः' 'इति आचार्याः' इत्यादीनि चाणक्यस्य आचार्यत्वसिद्धेः वचनानि निरर्थकानि एव स्युः॥

(४) चाणक्येन स्वयं न्यूनान्यूनं चतुर्दशाधिकशतकृत्वः पूर्वाचार्याणाम् उल्लेखं विधाय तेषां मतानि आलोचितानि॥

(५) ग्रन्थे सर्वत्र ग्रन्थकर्तृनामधेयं तद्विषयकोल्लेखो वा एकवचने एव उपलभ्यते ॥

(६) ग्रन्थादौ अप्रमादं प्रणीता विषयानुक्रमणिका दृश्यते । ग्रन्थोद्देश्यस्य ग्रन्थरचनायाश्च दुर्लभम् ऐक्यम् (Unity) अवाप्यते ॥

ग्रन्थादेव तावद् ज्ञायते यद् अर्थशास्त्रकर्त्रा एतच्छास्त्रविषयकान् नाना सन्दर्भान् वीक्ष्य तेषाम् उपादेय भागान् आदाय ग्रन्थोऽयं निर्मितः। 'राज्याधिकृतेभ्योऽपि तेन एतद्ग्रन्थोपयोगिनी पर्याप्तसामग्री उपलब्धा स्याद्' इत्यपि सम्भाव्यते, परं 'ग्रन्थोऽयं चाणक्यकृतिः नास्ति' इत्यस्य साधकं प्रमाणं नोपलभ्यते ।

## (३) ग्रन्थरचनाकालः ।

(१) डाक्टरशामशास्त्रिकृतस्य अर्थशास्त्रानुवादस्य ( महीशूरनगर्यां १९२३ मिते ख्रीष्टाब्दे प्रकाशितस्य ) भूमिकायां डाक्टरफ्लीटमहोदयेन अस्य सम्भाव्यकालः ख्रीष्टपूर्व ३२१ तमस्य २९६ तमस्य च अब्दस्य अन्तराले अवधार्यते । जैकोबि टामस ( Thomas ) प्रमुखैः विद्वद्भिश्च फ्लीटसम्भावितः कालः प्रमाणी क्रियते ॥

(२) अध्यापकजौलि ( Jolly )–मतेन तु ख्रीष्टतुर्यशतकस्य कामसूत्राख्येन ग्रन्थेन सादृश्यं बिभ्रतः ग्रन्थस्य अस्य कालोऽपि प्रायः ख्रीष्टतुर्यशतकम् एव अङ्गीकर्तुम् उचितः। मैगस्थनीज़ लेखेषु एतन्नामधेयस्य अनुपलम्भाद् जौलिमहाशयः विशिष्य तथा विश्वसिति। आधुनिकानाम् अनुसन्धातॄणां तु मते नहि मैगस्थनीज़स्य मौनं वा वचनं वा परमं प्रमाणं भवितुमर्हति । यतः, 'लिपिकलानभिज्ञाः खलु भारतीयाः' इति तदुक्तौ अद्य कस्य विदुषोऽस्ति विश्वासः । अथ 'भारतीयभाषासाहित्योभयपरिचय शून्यस्य मैगस्थनीज़स्य साक्ष्यं तावद् याथातथ्ये अल्बेरूनिसाक्ष्यादपि

अपकृष्यते' इति अध्यापकजौलिः स्वयमेव स्वीकरोति । वस्तुतस्तु मौर्यशासन-पूर्वकालिकस्य भारतस्य खलु चित्रम् अर्थशास्त्रे आरोपितं दृश्यते[1] । यदि च सूक्ष्मपर्यवेक्षकोऽपि मैगस्थनीज़ः अभविष्यत् तदापि स्वभावतः तस्य च चाणक्यस्य च वर्णनयोः अन्योन्यभेदः अवश्यम् अभविष्यत् । कैषा वा वाचोयुक्तिर्भवति 'मैगस्थनीज़लेखेषु चाणक्यविषयकः उल्लेखो नोपलभ्यते ।' इति । मैगस्थनीज़लेखेषु नन्दानाम् अपि उल्लेखः यदा नास्ति तदा चाणक्यस्य कैव कथा ?

(३) विण्टरनिट्ज़स्य[2] मतेन ख्रीष्टचतुर्थशतके अर्थशास्त्रस्य प्रणयनम् अभूत्, कश्चित् पण्डितश्च, न तु राजनीति कुशलो विद्वान्, अस्य प्रणेता भाति । परं भारतं वर्षे या हि राजनयज्ञः स एव पण्डितः, यश्च पण्डितः स एव राजनयज्ञोऽपि भवितुं शक्नोति, नहि पण्डितराजनयज्ञधर्मयोः तथा विरोधोऽस्ति । माधवसायणौ हि द्वौ भ्रातरौ योग्यौ राजसचिवौ वेदादि-शास्त्राणां पण्डितौ च खलु अभूताम् इति तु तावद् मतेऽत्र उपेक्षितम् एव । कीथोऽपि[3] अस्य प्रणयनकालं ख्रीष्टचतुर्थशतकम् एव अङ्गी करोति ॥

(४) केचित् तु कौटिल्यस्य ( कुटिलाख्यस्य महाभागस्य ) ऐतिहासिकव्यक्तित्वम एव निषेधन्ति परम् 'अर्थशास्त्रस्य कर्तुः वास्तविकं नाम-

---

१—अर्थशास्त्रे आलिखितासु तत्कालिकीषु सामाजिकावस्थासु कतिचिद् इमाः सन्ति—

(क) राजनियमविरुद्धाचरणे ब्राह्मणोऽपि वध्यः बभूव ॥
(ख) राजप्रजाहितार्थं मन्दिरधनापहरणम् अपि नानुचितम् अभवत् ॥
(ग) विशिष्टावस्थासु दाम्पत्यसम्बन्धविच्छेदः वैधः अभिमतः आसीत् ॥
(घ) पत्यौ मृते चिरप्रव्रजिते वा नारीणां पुनर्विवाहो धर्मशास्त्रानुमतः अमन्यत ॥
(ङ) अथर्ववेदोक्तानि यातुधानकर्माणि (Witch-craft) अन्वष्ठीयन्त ॥
(च) वैश्वानर-संकर्षण-महाकच्छानां पूजा प्रचलिता अभूत् ॥
(छ) यौवनावस्थां प्राप्य कन्या पतिवरणे स्वतन्त्रा आसीत् ॥
(ज) ब्राह्मणः शूद्राम् अपि उपयन्तुम् आर्हत् ॥
(झ) ब्राह्मणोऽपि सैनिकवृत्त्या अजीवत् ॥

२—दृश्यतां Calcutta Review 1924 (April)

३—दृश्यतां J. R. A. S. 1916 (130)

धेयं विष्णुगुप्तः कौटिल्यश्च कुटिलनीतिनिपुणत्वात् तस्य उपाहः किल बभूव' इति तावद् आवेदितचरम् एव ॥

(५) चाणक्यस्य ख्रीष्टपूर्वचतुर्थशतकभवत्वं तावत् तस्य चन्द्रगुप्त-मौर्येण सम्बन्धादेव स्पष्टम्। नरेन्द्रार्थे-मौर्यार्थे-प्रभृतिभिः पदैश्च 'चन्द्रगुप्त-जीवनकाले एव अर्थशास्त्रं प्रणीतम् अभूद्' इति आयाति ॥

(६) युता-राजुका-पाषण्डेषु-समाज-महामात्रा प्रभृतीनि पदानि च यदर्थवाचकानि अर्थशास्त्रे तदर्थवाचकानि अशोकलेखेषु अपि अव-लोक्यन्ते। अर्थशास्त्रस्य पदान्तराणि च अशोकलेखेषु अर्थान्तरेषु प्रयुक्तानि. कानिचिच्च अस्पष्टार्थानि सञ्जातानि ॥

(७) चक्रवाक-शुक-सारिकादिजीवानां हिंसानिषेधः, भैषिज्योप-योगिक्षुपादीनां वृक्षाणां च आरोपणविधानम्, मार्गेषु कूपखननादेशः, एवं विधान्यविधिनिषेधाश्च, यथा अर्थशास्त्रे तथैव अशोकलेखेषु अपि अधीयन्ते।

(८) केचित् तु अर्थशास्त्रस्य शैली बाह्याकृतिश्च अस्य अतथापुरा-तनत्वं द्योतयतः इति आकलयन्ति। यतो हि स्वयं ग्रन्थसाक्ष्येण ज्ञायते यद् आद्ये अर्थशास्त्रे पञ्चदशखण्डेषु विभक्तेषु पञ्चाशदधिकशताध्यायेषु श्लोकानां षट् सहस्राणि अभूवन् इति। अधुना लभ्यमाने तु अर्थशास्त्रे भूरिगद्यस्थ-लानि अपि अवलोक्यन्ते। अथ इमं स्वरूपविरोधं परिजिहीर्षवः अन्ये वदन्ति—'दण्डिनः पूर्वे सर्वे ग्रन्थकाराः[1] अर्थशास्त्रात् श्लोकान् उद्धरन्ति, परकालिकाश्च[2] गद्यस्थलानि। अथ (प्रायः ३५० मिते ख्रीष्टाब्दे) याज्ञवल्क्य-स्मृतौ सङ्गृहीतायां सत्यां ख्रीष्टस्य पञ्चमशतके यदि नाम अत्र सूत्रात्मको भागः समयोज्यत। तत् ख्रीष्टस्य आरम्भिकेषु शतकेषु अर्थशास्त्रे काऽपि रूपपरिवृत्तिः समजायत इति। परम् अत्र एतत् प्रष्टव्यं भवति 'किन्निमित्तं, कस्य हितार्थं, केन च एषा परिवृत्तिः कृता ?' इति। इदं तु तावद् विश्व-स्यते यद् देशे सर्वत्र अर्थशास्त्रे विदुषां यथा महानुरागः आसीत् तेन कालस्य प्रक्षेपकाणां च प्रहरणोद्यताद् हस्ताद् एतद् अवश्यम् अरक्ष्यत इति। न केवलम् एतावदेव। अर्थशास्त्रारम्भे अप्रमत्तं प्रणीता विषयानुक्रमणिका लभ्यते यत्र सर्वप्रकरणप्रतिपाद्यार्थाः यथाक्रमं निर्दिष्टाः सन्ति। तस्माद्

१—यथा, नारदस्मृतौ वात्स्यायनबौधायनवासिष्ठधर्मसूत्रेषु पालिजातकेषु च अर्थ-शास्त्रात् श्लोकाः एव उद्धृताः ॥

२—भवभूतेः महावीरचरिते, कामन्दकीयनीतिसारटीकासु, अमरकोषटीकायां कालिदासरचनाटीकासु च अर्थशास्त्राद् गद्यस्थलानि एव उद्धृतानि ॥

रचना अस्य सुचिन्तितरचनाविधिना अभवद् इति निश्चीयते। प्रक्षेपाश्च भारते केवलं मनु–याज्ञवल्क्य–व्यासादि प्रणीतेषु धार्मिकेषु आर्षेषु ग्रन्थेषु एव अभवन् न तु ऐतिहासिकेषु ॥

अथ प्रकरणेऽत्र दण्डिसादृश्यं विशिष्य महत्त्वास्पदं खलु अस्ति। उपलभ्यमानस्य अर्थशास्त्रस्य कतिपयानां स्थलानाम् अक्षरशः दण्डिना गृहीतत्वाद् अत्रत्वे प्रचरितस्य अर्थशास्त्रस्य दण्डिदृष्टत्वं प्रमाणान्तरं नैवापेक्षते। अपि च, इयमिदानीम् आचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः सङ्क्षिप्ता इत्येषोऽपि अर्थः खलु दण्डिना अनूदितो दृश्यते। तस्माद् न दण्डिपूर्वम् अर्थशास्त्ररूपपरिवृत्तिः जाता इति आयाति। किं तर्हि दण्डिनः पश्चात् (सप्तमशतकानन्तरं) एषा परिवृत्तिः संवृत्ता? इति चेत्, कः एवं सम्भावितवान्? न कोऽपि इति प्रत्युच्यते। दण्डिनः पञ्चाशद्वर्षमितात् कालाद् अपि न्यूने परकाले जातेन भवभूतिना यद् अर्थशास्त्रस्य सूत्रात्मकं स्थलम् उदाहृतम् तद् अर्द्धशताब्दीतोऽपि ऊने काले कस्य मते सम्भवं स्यात् ॥

अथ स्वयं ग्रन्थे पठ्यते 'स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यञ्च' इति। खीष्टस्य आद्यासु शताब्दीषु अर्थशास्त्रे जातायाः रूपपरिवृत्तेः समर्थकं प्रमाणं तु नोपलभ्यते। अथ 'श्लोकपदेन द्वात्रिंशद्वर्णाः अत्र ग्राह्याः' इति पी. वी. काणे (Kane) महोदयदर्शितेन प्रकारेण 'षट्सहस्रश्लोकसङ्ख्या ग्रन्थस्य लेखकेन स्वयं दर्शिता, गद्यं चापि श्लोकैः सह अत्रत्वे तत्र लभ्यते' इति शङ्काऽपि निरस्यते ॥

## (४) शैली।

अर्थशास्त्रस्य शैली आपस्तम्ब–बौधायनादि धर्मसूत्रशैलीम् अत्यन्तम् अनुहरति। अत्र गद्यं पद्यं च उभयं मिश्रितं दृश्यते। वस्तुतस्तु इह गद्यपद्ययोः प्रत्येकम् अन्योन्यस्य पूरकं वर्तते। एकेन विना अन्यद्धि अपूर्णं तिष्ठति। पुनश्च, एककर्तृकौ खलु अस्य सूत्र–भाष्यभागौ। क्वचित् क्वचिच्च भाष्ये तादृशः एव वाक्योपन्यासः लभ्यते यादृशः उपनिषत्सु ऊर्ध्वकालिक (Later)–ब्राह्मणेषु च। आदितः यावदन्तं च रचनायाः स्थूलशरीरस्य इव सूक्ष्मशरीरस्यापि किमपि एकरसघटनासौन्दर्यं ग्रन्थमेनं व्याप्नोति। क्वचित् क्वचित् पाणिनिव्याकरण विरुद्धप्रयोगाः अपि उपलभ्यन्ते। तथा हि पाणिनिसम्मतानाम् औपनिषत्क–रोचन्ते–चातुराश्रिका–शब्दानां स्थाने इह यथाक्रमम् औपनिषदिक–रोचयन्ते–चातुरश्रिका-शब्दाः प्रयुक्ताः अवाप्यन्ते ॥

॥ इति ॥

ग्रन्थानां, तत्कर्तॄणां, तदालोचकानां, तदन्तरागतानां नृपाणां

प्रसिद्ध भौगोलिक-ऐतिहासिक-स्थानादीनां च

# नामानुक्रमणी

[पाठकानां सुविधायै पृष्ठ संख्या समं पंक्ति संख्याऽपि अत्र दीयते। बिन्दु पूर्वं पृष्ठ संख्या तदनन्तरं च पंक्ति संख्या इति बोध्यम्, यथा—२३.३=पृष्ठ २३ पंक्ति ३; ६१.टि.२=पृष्ठ ६१ टिप्पणि २; ८६.२१-२९=पृष्ठ ८६ आ पंक्ति २१ यावत् पंक्ति २९; ८८—९५.=आ पृष्ठ ८८ यावत् पृष्ठ ९५; इत्यादि।

तत्र संकेताः—म.भ=महाभारतम्, प.व=पाश्चात्यः विद्वान्, अर्थ०=अर्थशास्त्रम्; मृच्छ०=मृच्छकटिका नाटकम्; कालि०=कालिदासः।]

## अ

## आ–इ

## ट



## त–न

## ब–भ

## श—ह

इति गर्गगोत्र जातेन श्री किशोरी लाल तनूजेन अग्रवालोपाह्वेन हंसराजेन निर्मितः संस्कृत साहित्येतिहासो नाम ग्रन्थस्य प्रथमो भागः ॥

—:०:—